|| श्रीः ||

# शङ्करजीवनाख्यानम् ।

## ॥ ग्रन्थार्पणम् ॥

अदृष्टपितृसौख्यायाः शैशवादपि या मम ।
जनकस्थानमापन्ना स्वयं बोधमजीजनत् ॥

कथयन्ती च या नित्यं पितृसम्बन्धिनीः कथाः ।
हृदि प्रेमाङ्कुरं देववाण्यां मे समरोपयत् ॥

तस्यै श्रीमदुपादेव्यै कृतिं शान्तात्मने मुदा ।
उपदशोभातिशायिन्यै मातृदेव्यै समर्पये ॥

# प्रस्तावः ।

( केळकरोपनाम्ना चिन्तामणिसूनुना नृसिंहशर्मणा कृतः )

महाराष्ट्रभुवः कण्ठमुक्ताहारनिभाः पुरा ।
पण्डिताः पण्डितोपाव्हा जाताः शङ्करनामकाः १

उदारं चरितं तेषां ग्रन्थेस्मिन्पद्यरूपिणि ।
क्षमया कन्यया तेषां पितृभक्त्या निवेदितम् ॥२॥

अभ्यर्थितोऽहं क्षमया देव्या सुस्नेहबद्धया ।
किञ्चित्प्रास्ताविकं वक्तुं ग्रन्थरूपविवेचकम् ॥ ३ ॥

गीर्वाणवाणीनिपुणा लेखिकेयं रसान्विता ।
सुवर्णनिधिसंयुक्ता क्षमेयं क्ष्मेव भाति मे ॥ ४ ॥

नाहं गीर्वाणवाण्यां तु कृतभूरिपरिश्रमः ।
अक्षमोऽपि नियोगस्य स्नेहेनास्मिन्नियोजितः ॥५॥

पण्डितः सार्थनामासौ शङ्करः संस्कृतप्रभुः ।
कन्यास्य पुत्रतां याता पालयन्ती कुलव्रतम् ॥६॥

कथं हि न करिष्यन्ति कन्याभ्यः पितरः स्पृहाम् ।
ऋणं तत्पैतृकं पुण्यमपाकुर्युर्यदीह ताः ॥ ७ ॥

धन्या सा लेखिका मन्ये क्षमादेवी यशस्विनी ।
स्वतातचरणानां या गुणान्भक्त्याभिगायति ॥८॥

अतः किमधिकं श्रेयो नराणामिह जन्मनि ।
पूर्वजानां यशोगाने प्रीत्या व्याप्रियते यदि ॥९॥

गार्गी वाचक्नवी यद्वा मैत्रेयी सुलभा पुरा ।
ज्ञानविज्ञानसम्पन्ना विदुष्यः कीर्तिमाप्नुवन् ॥१०॥

तासां परम्परा किञ्चिद्द रक्षिताऽधुनिके युगे ।
क्षमया रावपत्न्या च रमया पण्डिताख्यया ॥११॥

पुरुषाः पण्डिताः सन्तु तेषां कर्तव्यमेव तत् ।
व्यासक्तिर्देववाण्यां तु शोभते स्त्रीपुरस्कृता ॥१२॥

परिचर्यापि 'वृद्धा'नां स्त्रीकृतैव विशिष्यते ।
स्निग्धतामार्दवाद्यास्ते गुणाः स्त्रीणां स्वभावजाः १३

लीलाप्रिया हि तटिनी स्पृशतीह तटद्वयम् ।
मन्ये गीर्वाणवाणीयं तच्छीलमनुरुध्यते ॥ १४ ॥

पुरा सा पूर्वगोलार्धं पुष्यन्ती रससम्पदा ।
भवितव्यविलासेनाऽभवत् पश्चिमवाहिनी ॥१५॥

आङ्ग्लशार्मण्यदेशीयाः पण्डिताः शोधकास्तथा ।
अभ्यस्यन्त्यधुना भाषां गैर्वाणीं प्रेमनिर्भरम् ॥१६॥

अत एव हि कर्तव्यो भारतीयजनैः पुनः ।
प्रयत्नः सततं तस्याः पुनरुज्जीवने मुदा ॥ १७ ॥

प्राच्यसंस्कृतिविज्ञानज्ञानद्वारमपावृतम् ।
निखिलैस्तत्प्रवेष्टव्यमार्यभूतिहितैषिभिः ॥ १८ ॥

श्लाघ्या विद्या निजगुणैः पाश्चात्या भुवि यद्यपि ।
विरुणद्धि न सा नूनं मनागप्यार्यसंस्कृतिम् १९

निष्ठे द्वे ते, ज्ञानमार्गौ तौ, स्वीकार्यौ पृथक् पृथक् ।
संयुक्तौ तु परं नृणां द्विगुणीकुरुतो हितम् ॥२०॥

देववाणी मृता नैव, गुप्तचैतन्यशालिनी ।
अदृश्यवाहिना दुग्धस्रोतसा पाति संस्कृतिम्॥२१॥

नैकापि देशभाषाणां स्थातुं शक्नोति तां विना ।
तदाधारः प्रभवति तासां संसारकर्मणि ॥ २२ ॥

चरित्रं शङ्करस्यैतत् प्रयागसदृशं शुचि ।
सङ्गमो रुचिरः सोऽत्र प्राच्यपाश्चात्यविद्ययोः २३

पाण्डित्यमेव न परमितरेऽपि पितुर्गुणाः ।
वर्णिताः क्षमया ग्रन्थे रीतिसौन्दर्यशालिनि ॥२४॥

सौहार्दं शङ्करस्येदं माधवस्य च धीमतः ।
श्रेयसे जगतो भाति शिवकेशवयोरिव ॥ २५ ॥

अधिक्षेपेऽभिमानित्वं, वीर्यं विप्रकृतौ तथा ।
दीने दया धृतिः काले सर्वदा सत्कृतौ रुचिः २६

औदार्यं परमं चापि देशकालानुवर्तनम् ।
प्रथयन्ति गुणानेतांश्चरितानि महात्मनः ॥२७॥

प्रसन्ना सरसा वाणी क्षमादेव्या गुणान्विता ।
सूक्तिभिर्मण्डिता नूनमलङ्कारविभूषिता ॥ २८ ॥

कृतिनं पण्डितं मन्ये यस्य कन्या क्षमासमा ।
क्षमापि कृतिनी नूनं शङ्कराल्लब्धसम्भवा ॥ २९ ॥

उभाभ्यां संयुतं मन्ये धन्यं भारतमण्डलम् ।
ईदृशो दृश्यते यत्र योग्यो गुणिसमागमः ॥३०॥

अध्येतॄन् निखिलान् सद्यः कुरुतात् कार्यतत्परान् ।
इत्याशास्य मया सोऽयं ग्रन्थस्तेभ्यः समर्प्यते ३१



## श्रीशङ्करजीवनाख्याने विषयानुक्रमणिका ।

# शङ्करजीवनाख्यानम् ।



## ग्रन्थगताः काश्चन सूक्तयः ॥



| | पृष्ठे | श्लोके |
|---|---|---|
| निर्धनोऽपि वरं प्राज्ञो निर्बुद्धेर्धनिकादपि । | ६ | ११ |
| फलत्येव हि कल्याणं फलं तीव्रतपस्तरुः । | ८ | १८ |
| अहितं हितमेव स्याद्दैवयोगेन देहिनाम् । | ९ | २८ |
| अहो दैवस्य वैचित्र्यं दीना निर्दीपपाठिनः ।<br>विद्युद्दीपविभूत्यापि धनिकास्तु निरक्षराः ॥ | ११ | ८ |
| स नाम्ना भास्करोऽप्यासीन्न प्रचण्डः स्वकर्मणा । | २० | ८ |
| अनाथयोऽपि लोकेऽस्मिन् शुद्धात्मा न निरस्यते ।<br>वीक्षितः पुंविशेषेण प्रभुणा दीनबन्धुना ॥ | ११ | ११ |
| सुरावासोचिताभ्यासः स्वभ्यासोचितसंस्कृतिः ।<br>संस्कृतेः सदृशारम्भः शङ्करः शङ्करोऽभवत् ॥ | १३ | १३ |
| को नाम वयसि प्रौढे विस्मरेन्निजधात्रिकाम् । | १९ | १७ |

| | पृष्ठे | श्लोके |
|---|---|---|
| दिव्यः परिचयोऽनेन घनीभूय दिनादिनम्<br>सञ्जातः सौहृदग्रन्थिरपुनर्भेद्यलक्षणः ॥ | १८ | २९ |
| मनो हि महनीयानां प्रेमहेतुर्न संनिधिः । | ३२ | ४६ |
| अध्रुवं यातु नो वित्तं न पुनर्वाङ्मयो निधिः । | ५२ | २३ |
| आङ्ग्लाधिकारिणो नूनं निपुणाः स्वार्थसाधने ।<br>तिले तालं हि पश्यन्तः करिष्यन्त्यधरोत्तरम् ॥ | ७७ | ४५ |
| परपिण्डोपभुग् यः स्यात् स्वतन्त्रः स कथं भवेत् । | ७७ | ४६ |
| आत्मनोऽपि वरं भङ्गो न पुनः शिरसो नतिः । | ७ | ८० |
| पदोन्नतिकृतैश्वर्यं शक्यते हि व्यपोहितुम् ।<br>सद्विद्यारूपमैश्वर्यं तव हर्तुं क्षमेत कः ॥ | ८० | ११ |
| उक्तं हि पूर्वजैः प्राज्ञैः श्रेष्ठवृत्तिः कृषीवलः ।<br>वाणिजो मध्यमो वृत्त्या कनिष्ठः परसेवकः | ८३ | २९ |
| यदवार्यं सहेत तत् । | ८४ | ३१ |
| शैशवे सुखदः पुत्रो बाललीलाप्रजल्पनैः ।<br>प्रयच्छति सदानन्दं माधवस्तु सुहृन्मणिः ॥ | ९५ | ६० |

॥ श्रीः ॥

# गुरुदेवस्मृतिः ।

नमः शङ्करदेवाय निराकारस्वरूपिणे ।
गुरवे विबुधेशाय क्षमादितनुधारिणे ॥

॥ श्रीः ॥

# शङ्करजीवनाख्यानम् ।

॥ प्रथमोल्लासः ॥

वाम्बोलीनामनि ग्रामे कोङ्कणावनिमण्डले ।
सार्धैकशतवर्षेभ्यः पूर्वमासीत्कुलं महत् ॥ १ ॥

पण्डिताख्यान्विते यस्मिन् जज्ञे कश्चिद्द्विजोत्तमः ।
नारायण इति ख्यातो निर्धनोऽपि धनी गुणैः २

लिपिचुञ्चुर्विनीतोऽसौ सुशीलश्चात्मसंयमी ।
चकार जीवनं क्षेत्रात्तथा पत्रविलेखनात् ॥ ३ ॥

वीरद्विजन्मनां वंशे सञ्जाता तस्य गेहिनी ।
अस्याः पिता हि सङ्ग्रामे लब्धकीर्तिरभूत्पुरा ॥४॥

पञ्चकन्याऽष्टपुत्रा च भवेत्युक्ताऽऽशिषं पुरा ।
अमोघं कर्तुकामेव गुरूणां मङ्गलं वचः ॥ ५ ॥

सुषुवे तस्य भार्याष्टौ पट्टनोजस्विनस्सुतान् ।
शोभनाः पञ्च कन्याश्च चतुराः शुभलक्षणाः ॥६॥

अथ नारायणस्यासीदनपत्यः सहोदरः ।
पाण्डुरङ्ग इति ख्यातः स च कालवशं गतः ॥७॥

तदीयमन्दिरे बालास्तदारभ्य रुजार्दिताः ।
पदे पदे भवन्ति स्म नित्यक्लेशकराः पितुः ॥ ८ ॥

प्रेतेन पाण्डुरङ्गेण सन्तानाभावकारणात् ।
आविश्य पीडिता एते बालका मे मुहुर्मुहुः ॥९॥

इति नारायणो ध्यायन् प्रेतमामध्य चेतसा ।
शङ्करस्य करं धृत्वा जगादाप्तजनाग्रतः ॥ १० ॥

अर्पये पुत्रकामाय पाण्डुरङ्गाय ते प्रिय ।
शिशुं मे तव वंशार्थं प्रसन्नो भव बान्धव ॥ ११ ॥

मुञ्च मे बालकानन्यान्मा पुनस्तान्निपीडय ।
इत्युक्त्वा देवभूताय तस्मै शङ्करमार्पयत् ॥ १२ ॥

इत्थं निजकुमाराणामुत्तमं स वितीर्णवान् ।
दत्तकं पुत्रहीनाय पाण्डुरङ्गाय बालकम् ॥ १३ ॥

स च तद्भार्यया पश्चाद्विधिना स्वीकृतोऽभवत् ।
न चावैत्कोऽपि यद्बालो भविता सुप्रसिद्धिमान् १४

यदसौ स्वश्रमेणैव संस्कृतज्ञानसम्पदम् ।
सम्पाद्य न चिराल्लोके भविता च सुकीर्तिमान् १५

यदसावचिराद्भूत्वा पूज्यः पण्डितमण्डले ।
पण्डितख्यातिमन्वर्थां कर्ता च निजसन्ततेः ॥१६॥

उद्धृत्य बान्धवान् नसृभ्रातृस्वसृमुखांश्च सः ।
अलङ्कर्ता कुलं कीर्त्या यथात्मानं सुविद्यया ॥१७॥

अथ कालोपनीतेऽस्मिन्नेकादशवयस्स्पृशि ।
जनकश्चिन्तयामास वटोर्दारक्रियां प्रति ॥ १८ ॥

निश्चित्य कन्यकामेकां दुर्गानाम्नीं शुचेः कुलात् ।
अनुक्त्वैव कुमारं च शुभकार्योद्यतोऽभवत् ॥१९॥

व्यवसायं पितुर्दृष्ट्वा भीतविभ्रान्तचेतनः ।
बालः पल्लवगुल्मेषु कचिदस्थाद्दिनद्वयम् ॥ २० ॥

अथान्विष्य बटुं नष्टं बन्धुरेकः समानयत् ।
हठाद्विवाहितः सोऽपि हन्त निश्चितकन्यया ॥२१॥

इति सौ. क्षमायाः कृतिषु शङ्करजीवनाख्याने
बाल्यवर्णनो नाम प्रथमोल्लासः ॥

॥ द्वितीयोल्लासः ॥

अथाष्टादशवर्षीयो मातृवाच्येव शिक्षितः ।
स वव्रे लिपिकारस्य वृत्तिमेवात्मवृत्तये ॥ १ ॥

स्वैरं सञ्चरमाणोऽसौ पथा पुण्येऽहनि कचित् ।
ग्रामकार्यालयस्यागात्सन्निकर्षं यदृच्छया ॥ २ ॥

मन्दिरस्य बहिर्वेदौ तत्र लोकान् ददर्श सः ।
निषण्णानुच्चपीठेषु लिखतः फलकोपरि ॥ ३ ॥

सदाभूमितलासीनः स्वयमेष व्यचिन्तयत् ।
अहो लेखनसौकर्यमिदं पीठोपवेशिनाम् ॥ ४ ॥

अपि नाम कदाप्येष प्राप्नुयां पीठयोग्यताम् ।
न हि संभाव्यते यावदाङ्ग्लविद्या न शिक्षिता ५

उत्सुकस्यापि मे स्थानमीदृशं भाति दुर्लभम् ।
पूर्णेन्दुरिव डिम्भस्य लिप्सोः कन्दुकमानिनः ॥६॥

अकिञ्चनः कथं कुर्यां तदभ्यासं महाव्ययम् ।
इति निर्वेदमापन्नो निराशप्रायतां गतः ॥ ७ ॥

कांश्चित्तथापि कृच्छ्रेण सङ्गृह्य स्वल्पनाणकान् ।
बालशिक्षामुपक्रीय स्वयं पठितुमुद्यतः ॥ ८ ॥

अथ प्रोत्साहितो यत्नैर्जिज्ञासुश्चाधिकाधिकम् ।
विद्यासम्पादनार्थाय प्रवृत्तोऽभूद्दिवानिशम् ॥९॥

नाहं सम्यक् पठेयं चेदाङ्ग्लभाषां नृपार्चिताम् ।
तदज्ञानतमःक्लेशो यावज्जीवं भवेन्मम ॥ १० ॥

निर्धनोऽपि वरं प्राज्ञो निर्बुद्धेर्धनिकादपि ।
निर्धनस्याज्ञता नाम मरणादतिरिच्यते ॥ ११ ॥

अतः प्राणव्ययेनापि प्राप्स्यामि ज्ञानमर्थदम् ।
इति निश्चित्य चानेकानुपायान् स व्यचिन्तयत् १२

आसीत्कश्चिद्युवा ग्रामे वणिक्पुत्रः सुशिक्षितः ।
योऽस्मै पठितमुक्तानि पुस्तकानि ददौ प्रियः ॥१३॥

वृत्तेषु दिनकृत्येषु पठति स्म स शङ्करः ।
निशि मार्गप्रदीपेषु निर्जने दूरतो गृहात् ॥ १४ ॥

परिश्रान्तो मिताहारः पपाठानन्यचेतसा ।
न च सूर्योदयात्पूर्वं व्यरंसीद्वाग्युपासनात् ॥ १५ ॥

चलन्मृदुपदं गेहमदृष्टः सहवासिभिः ।
प्रविश्य भूतलास्तीर्णे सुष्वाप शयने ततः ॥ १६ ॥

एवं दिवसमायस्यन् कुटुम्बभरणाय सः ।
जीविकां साधयन्नेव निशि विद्यामशिक्षत ॥ १७॥

व्युत्पत्तिराङ्ग्लभाषायामस्य वृद्धिमगाच्छनैः ।
फलत्येव हि कल्याणं फलं तीव्रतपस्तरुः ॥ १८ ॥

तथाप्यस्याग्रजो दृष्ट्वा पितरं वृत्तिकर्शितम् ।
साह्यमस्य चिकीर्षुः सन् कर्तव्यं समचिन्तयत् १९

स नाम्ना भास्करोऽप्यासीन्न प्रचण्डस्स्वकर्मणा ।
मृदूपायेन केनापि धनमर्जयितुं हि सः ॥ २० ॥

वेणुग्रामं समासाद्य न्यवसद्वत्सरद्वयम् ।
अथेतः शङ्करोऽन्वेष्टुं लेखकोद्योगमेकदा ॥ २१ ॥

आङ्ग्लस्य कस्यचित्पार्श्वं गत्वा निष्कासितोऽभवत्।
अपमानाद्विपण्णश्च चिन्तयामास सत्त्ववान् ॥२२॥

आङ्ग्लवाणीं विनाभीष्टं नैव सिध्येत्कदापि मे ।
तदभ्यासो धनापेक्षः का गतिर्मेऽत्र कर्मणि ॥२३॥

तावच्च भास्करो दिष्ट्या प्रियो ज्येष्ठसहोदरः ।
वेणुग्रामात्पुनर्गेहमाययौ कार्यहेतुना ॥ २४ ॥

स तत्र शङ्करं दृष्ट्वा नितरां खिन्नमानसम् ।
वेणुग्रामस्य सौन्दर्यं प्रशंसन्नब्रवीन्मुदा ॥ २५ ॥

मा स्म खिन्नो भवो वत्स नेष्यामि त्वा मया सह ।
वेणुग्रामं यतस्तत्र वेतनं मे द्वयोरलम् ॥ २६ ॥

इति प्रोत्साहितस्तेन प्रवासाय विनिश्चितः ।
गुरूणामप्यनावेद्य विद्यार्थी निर्जगाम सः ॥ २७ ॥

अहितं हितमेव स्याद्दैवयोगेन देहिनाम् ।
अपमानोऽपि सञ्जातः शङ्करस्य सुखोदयः ॥ २८ ॥

इति सौ. क्षमायाः कृतिषु शङ्करजीवनाख्याने
विद्यारम्भवर्णनो नाम द्वितीयोल्लासः ॥

## ॥ तृतीयोल्लासः ॥

कस्यचित्तक्षकस्यासौ संश्रये भास्करोऽवसत् ।
अङ्गणे तस्य गेहस्य पचन्नश्नन् पठन् स्वपन् ॥ १ ॥

पाठयंश्च वटून् कांश्चिल्लेभेऽसौ रूपकद्वयम् ।
आङ्ग्लवाणीमधीयानः श्रमेण स्वयमन्तरा ॥२॥

स्वान्नस्यार्धं ददाति स्म शङ्करायानुजप्रियः ।
शङ्करोऽपि स्वयं विद्यां शिक्षते स परिश्रमी ॥३॥

कस्याश्चित्पाठशालायाः स तिष्ठन् बहिरन्वहम् ।
शृणोति स्म गुरूनन्तः पटुः शिक्षयतो वटून् ॥४॥

उभावपि प्रयस्यन्तौ निर्धनावपि सात्त्विकौ ।
तैलं क्रेतुमसामर्थ्याद्दीपार्थं क्लेशमापतुः ॥ ५ ॥

वर्धकेरङ्गणे काष्ठखण्डान् संगृह्य भूरिशः ।
ज्वालयन्तौ निशाकाले पेठतुर्ज्ञानतर्पितौ ॥ ६ ॥

जागृयामाग्निनिर्वाणमिति रज्ज्वा स शङ्करः ।
भित्तिकीलावलम्बिन्या शिखां बध्वावतस्थिवान् ७

अहो दैवस्य वैचित्र्यं दीना निर्दीपपाठिनः ।
विद्युद्दीपविभूत्यापि धनिकास्तु निरक्षराः ॥ ८ ॥

अथ गच्छत्सु मासेषु वियोगः समभूत्तयोः ।
कराचीनगरं याते कार्यलाभेन भास्करे ॥ ९ ॥

सोदरेण वियुक्तस्य शङ्करस्योपजीविनः ।
निपेतुर्दुःसहाः क्लेशा भग्ननौकस्य वाम्बुधौ ॥१०॥

अनाश्रयोऽपि लोकेऽस्मिन् शुद्धात्मा न निरस्यते ।
वीक्षितः पुंविशेषेण प्रभुणा दीनबन्धुना ॥ ११ ॥

आसीत्तथा हि विप्रेन्द्रो धार्मिको दीनवत्सलः ।
वासुदेव इति ख्यातो वेणुग्रामे कृतस्थितिः ॥१२॥

स च शङ्करमाहूय कुमारं साधुरब्रवीत् ।
विद्यासम्पादनार्थाय त्वमेतत्पुरमागतः ॥ १३ ॥

सहसे दुःसहान्क्लेशानिति भूयो हि नः श्रुतम् ।
तद्धन्योऽसि प्रशस्या ते ज्ञानतृष्णा कुमारक ॥१४॥

धन्यां तपस्विनीं मन्ये या प्रसूता भवादृशम् ।
धन्योऽहं च यदातिथ्यं कर्तुं पूज्याय ते क्षमः १५

तदात्मीयं गृहं मत्वा निवसात्र यथेप्सितम् ।
मा स्म भीतो भवो भद्र सहिष्ये निखिलव्ययम् १६

इति वागमृतं पीत्वा निर्व्याजकरुणानिधेः ।
सबाष्पो बाढमित्याह युवा दीनः सगद्गदम् १७

बभूव वासुदेवोक्तिः शर्मदा शङ्करस्य सा ।
पिपासितस्य कान्तारे यथा स्वच्छतरङ्गिणी ॥१८॥

सन्तः पुण्यसमाचारा ईदृक्षा हि मनस्विनः ।
नैकस्याः केवलं व्यक्तेर्देशस्याप्युपकारिणः ॥ १९ ॥

यावज्जीवं कृतज्ञोऽभूत्तस्मिन् कृतिनि शङ्करः ।
चक्रे च तद्गृहावासी विद्याभ्यासं यथासुखम् ॥२०॥

आसीद्वर्षत्रयेणैव पूर्णसासाब्दिकक्रमः ।
महाविद्यालयेऽध्येतुं लेभे च च्छात्रवेतनम् ॥ २१ ॥

प्रतिष्ठासुरथ ग्रामात्कृतज्ञत्वभरानतः ।
द्रवीभूतान्तरोऽनुज्ञां वासुदेवमयाचत ॥ २२ ॥

सुखावासोचिताभ्यासः स्वभ्यासोचितसंस्कृतिः ।
संस्कृतेः सदृशारम्भः शङ्करः शङ्करोऽभवत् ॥२३॥

इति सौ. क्षमायाः कृतिषु शङ्करजीवनाख्याने
विद्याभ्यासवर्णनो नाम तृतीयोल्लासः ॥

---

## ॥ चतुर्थोल्लासः ॥

तदाशीर्वर्धितो दृष्टशुभारम्भफलोदयः ।
अगान्मुम्बापुरीं हृष्टो विद्यामृतपिपासया ॥ १ ॥

एल्फिन्स्टन्निति विख्याते महाविद्यालये युवा ।
प्रचण्डोत्साहसम्पन्नः प्रविष्टोऽभूद्यथाविधि ॥ २ ॥

अथ पारंगतं वर्षद्वयान्ते तं परीक्षणे ।
शालाध्यक्षो ह्युलिङ्गार्यः प्राह तद्बुद्धितोषितः ॥३॥

द्वितीयोपगुरोः कार्यमङ्गीकर्तुमिहार्हसि ।
पाठ्यन्तां विषयाः केचित्पूर्ववर्गे सचेतनम् ॥४॥

इति तस्य वचः श्रुत्वा शङ्करः समचिन्तयत् ।
विच्छेदः स्यान्ममाभ्यासे परशिक्षणकार्यतः ॥५॥

न व्यतिक्रमितुं युक्तमिदं च वचनं गुरोः ।
इति मत्वा प्रतिप्राह विनीतस्तस्य तुष्टये ॥ ६ ॥

मितज्ञोऽपि जनोऽयं चेद्भवद्भिर्मन्यते क्षमः ।
त्रिवारं पाठयिष्यामि सप्ताहे वेतनं विना ॥ ७ ॥

इत्युक्त्वा लाटिनाङ्ग्लेये नव्यविद्यार्थिनो युवा ।
वाङ्मये शिक्षयामास स्वयं चाध्यैष्ट तत्परः ॥ ८ ॥

षड्वर्षाभ्यन्तरे सोऽभूत्समारभ्यांग्लशिक्षणम् ।
पूर्वाभ्यस्तगिरोऽप्यन्यानहो पाठयितुं क्षमः ॥ ९ ॥

तत्काले भूसुरश्रेष्ठः संस्कृताचार्यपुङ्गवः ।
रामकृष्ण इति ह्यासीद् भाण्डारकरवंशजः ॥ १० ॥

बीएपरीक्षासुत्तीर्णः शङ्करोऽध्यापकत्वतः ।
पुण्यपुर्यां नियुक्तोऽभून्महाविद्यालये क्वचित् ॥ ११ ॥

अथैकस्मिन् दिने सोऽयं देवभाषाभिमानिनः ।
सहसाभिमुखं प्राप्तो रामकृष्णमनीषिणः ॥ १२ ॥

स युवानं समालोक्य ब्रह्मवर्चसभास्वरम् ।
विस्मितोऽपि किलावादीत्कर्कशं संस्कृताधिपः १३

किमहो पण्डिताख्येन विप्रेणापि तिरस्कृता ।
देवभाषा त्वया हन्त लाटिनी च पुरस्कृता ॥१४॥

सुखेन साध्यया चापि किं गिरा परकीयया ।
स्वदेशमेव नज्ञात्वा परदेशाटनेन किम् ॥ १५ ॥

त्यक्त्वा निजाङ्गनां साध्वीं किमन्या सेव्यते बुधैः ।
जननीं वा परित्यज्य किमन्याऽऽश्रीयतेऽर्भकैः ॥१६॥

अथ वा देवभाषायाः काठिण्यात् त्रासितोऽसि किम्
यदेतां दूरतः कृत्वा प्रणामोऽस्यै समर्प्यते ॥१७॥

अक्षमोऽसि श्रमं सोढुमलसत्वाच्च मन्यसे ।
विमलामपि तां वाणीं काठिण्येन कलङ्किताम् १८

को नाम वयसि प्रौढे विस्मरेन्निजधात्रिकाम् ।
शैशवे पायितः स्तन्यं रक्षितश्च प्रयत्नतः ॥ १९ ॥

निशम्य वचनं धृष्णोर्लज्जितो नितरां युवा ।
उपालब्ध स्वमेवासौ प्रतिजज्ञे च निश्चितः ॥२०॥

एष प्राणव्ययेनापि साधयिष्यामि संस्कृतम् ।
अपण्डितव्यपदेशो मे यथान्वर्थो भवेदयम् ॥ २१ ॥

अथ दक्षिणशालायां पाठयन्नेव शङ्करः ।
संस्कृताभ्यसनं चक्रे तीव्रसंवेगमास्थितः ॥ २२ ॥

षण्मासाभ्यासमात्रेण विश्वविद्यालयोद्भवाम् ।
परीक्षां कठिनामेकामुदतारीत्स लीलया ॥ २३ ॥

अथ प्रौढतराभ्यासः परीक्षामन्तिमां ददौ ।
एम् ए इति सुविख्यातां सिद्धार्थश्चाभवत्पुनः ॥२४॥

शिक्षकः पाठशालायां शिशिक्षे स्वयमप्यसौ ।
कुतश्चित्तैनिकाद्वार्णीं शार्मण्यविषयोद्भवाम् ॥२५॥

विश्वविद्यालये तस्य सद्भिः परिचयोऽजनि ।
भारतस्य द्विजश्रेष्ठैः सहविद्यार्थिभिः स्थितैः ॥२६॥

तत्रैवासीत्सुविख्यातः श्रीमान्माधवरानडेः ।
सद्गुणानां निधी रत्नश्रेष्ठानामिव सागरः ॥ २७ ॥

दिव्यः परिचयोऽनेन घनीभूय दिनाद्दिनम् ।
संजातः सौहृदग्रन्थिरपुनर्भेद्यलक्षणः ॥ २८ ॥

महान्तौ पुरुपावेतौ स्निग्धवृत्ती परस्परम् ।
निसर्गादिव संजातौ यथा श्रीरामलक्ष्मणौ ॥२९॥

कथमेतादृशं सख्यं तयोर्भिन्नस्वभावयोः ।
प्रथमाद्दर्शनादेवेत्यासील्लोकस्य विस्मयः ॥ ३० ॥

आसीच्छ्रीमाधवः शान्तः सत्त्ववान् माधवोपमः ।
शङ्करश्चापि तेजस्वी वशी शङ्करसंनिभः ॥ ३१ ॥

न विचित्रा हि मे भाति मैत्री तत्तादृशी तयोः ।
सख्ये नैसर्गिके यस्मात्प्रेमबन्धो महत्तमः ॥ ३२ ॥

समानबुद्धियुक्तानां स्नेहः शीघ्रसमुद्भवः ।
स च निष्कामतायां स्याच्चिरस्थायी च निश्चलः ३३

तस्मादाजीवपर्यन्तममू दाशरथी इव ।
घद्धावक्रत्रिमप्रेम्णा ववृताते परस्परम् ॥ ३४ ॥

चिरायाथ पृथग्भूतौ स्वस्वकार्यपरायणौ ।
लोकसेवासमासक्तौ न्यूषतुः पण्डिताविमौ ॥३५॥

प्रवासानन्तरं भूयः समेतौ सुहृदावुभौ ।
निमग्नौ नित्यमालापे निन्यतुर्निखिलां निशाम् ३६

बुभूषुः संस्कृताचार्यो विश्वविद्यालयेऽथसः ।
आसीदवसरान्वेषी लेभे च पदमीप्सितम् ॥३७॥

तथाह्यभून्नियुक्तोऽसौ दक्षिणाध्ययनालये ।
पुण्यपूर्यां स्वतःप्राप्तवैदुष्योऽब्दत्रयान्तरे ॥ ३८ ॥

अथ कार्यवशात्तेन भूमयानेन गच्छता ।
एकदा ददृशे दैवात्कश्चिदाङ्ग्लो महाजनः ॥३९॥

अचिरादेव पाश्चात्यो बुबुधे यत्सहाध्वगः ।
शङ्करः परमो विद्वान् ग्रन्थकर्ता च विश्रुतः॥ ४० ॥

तयोः क्रमेण सञ्जाते प्रचुरान्योन्यसंस्तवे ।
विस्मितः शङ्करस्याभूद्दृष्ट्वाङ्ग्लो बुद्धिकौशलम् ४१

अब्रवीच्च भवत्कीर्तिः केन वा भुवि न श्रुता ।
मन्ये संस्कृतमभ्यस्तं भवता सुचिरं श्रमात् ॥४२॥

सस्मितं शङ्करोऽवादीन्न मे तत्र चिरश्रमः ।
तस्य गन्धोऽपि मे नासीत्प्रागितोऽब्दचतुष्टयात् ४३

पठिता हि मया लाटिन् भाषा विद्यालये पुरा ।
इति श्रुत्वाब्रवीदाङ्ग्लो नूनं सा दुर्गमाऽस्ति वः ४४

अपि शक्तो भवान् वक्तुं तया वाण्येति वादिनम् ।
पृच्छयतां प्रतिवक्ष्यामीत्यभाषत स शङ्करः ॥४५॥

प्रचक्रमेऽथ सँल्लापमाङ्ग्लो लाटिनभाषया ।
चिन्तयन् भारतीयोऽयं न वक्तुं पारयेदिति ॥४६॥

शङ्करस्तु सुविस्पष्टं वाक्पटुः प्रत्यवोचत ।
तमाङ्ग्लेयं चमत्कुर्वन् द्वेषयंश्चात्ममानिनम् ॥४७॥

अथाङ्गलः प्राह तुष्टोऽस्मि नितरामार्य ते गिरा ।
अभिनन्द्यं हि ते ज्ञानं परकीयवचस्यपि ॥ ४८ ॥

स्वप्नेऽपि न मया वाचः पटुत्वं दृष्टमीदृशम् ।
मद्देशेऽपि न दृश्यन्ते वक्तारो हि भवादृशाः ॥४९॥

न विद्मो लाटिनज्ञेषु भारतीयेषु सत्स्वपि ।
शिक्षकाः किमिहानेयाः शासकैः परदेशतः ॥५०॥

इति चित्रीयमाणेन वैदेशिकविपश्चिता ।
श्लाघ्यमानः स्वकार्यान्ते न्यवृतन्निजमन्दिरम् ५१

मातृवाचि परा भक्तिस्तस्य बाल्यादपि स्थिता ।
वेणुग्रामाश्रयोऽप्यासीत्सर्वदा तत्परायणः ॥ ५२ ॥

विश्वविद्यालयोद्युक्तः काव्यामृतरसं सदा ।
कवीनां वामनादीनामपिबत् परमादरात् ॥ ५३ ॥

मोरोपन्तस्य काव्येषु परं गौरवमावहन् ।
तानि लोकसुबोधत्वात्प्रकाशयितुमुद्यतः ॥ ५४ ॥

आसीत्सुशिक्षितानां च भक्तिरल्पीयसी तदा ।
मातृवाचीति तेनापि चिरादेव निरूपितम् ॥५५॥

शास्त्रिणा केनचित्सार्धं वेणुग्रामनिवासिना ।
वर्वेनाम्नाऽकरोन्मातृवाङ्मयस्य सुशोधनम् ॥ ५६ ॥

पदवर्णवचोलोपमवलोक्य क्वचित्क्वचित् ।
वाक्यानि पूरयामास व्यञ्जयन् निजनैपुणीम् ५७

बृहद्दशमकाव्यस्य समाप्य परिशीलनम् ।
ग्रन्थं समार्पयत्प्रीत्या भाऊदाजीमहात्मने ॥५८॥

देशभाषावचःप्रौढिं महतीं परिपुष्णते ।
आत्मनेवापरैः सद्भिः पण्डितैर्मानिताय च ॥५९॥

कविचूडामणेरेवं मोरोपन्तस्य शङ्करः ।
काव्यामृतरसैर्लोकाननन्दयामास सर्वतः ॥ ६० ॥

ततश्चकार गाथानां तुकाराममहात्मनः ।
संशोधनममूल्यानां साहाय्याद्विष्णुशास्त्रिणः ६१

नानाग्रामपुरेभ्योऽयं लेखान् संगृह्य यत्नतः ।
चक्रे ग्रन्थपरिष्कारं जागरूकः परिग्रहे ॥ ६२ ॥

गाथावलिरियं पुण्या लोकेषु प्रथिताभवत् ।
आविद्वत्पामरं सर्वे शान्तिमापुस्तया भृशम् ॥६३॥

ततोऽसौ मातृवाग्भक्तः पराङ्मुखजनानपि ।
विद्वानभिमुखीचक्रे सुधानिष्यन्दिवाङ्मयैः ॥६४॥

ज्ञानेश्वरतुकाराममुकुन्दादिकवीश्वरान् ।
स्तुवन् तत्काव्यपीयूषं सर्वलोकानपाययत् ॥६५॥

इति सौ. क्षमायाः कृतिषु शङ्करजीवनाख्याने
विद्यासमाप्तिवर्णनो नाम चतुर्थोल्लासः ॥

॥ पञ्चमोल्लासः ॥

नवविंशतिवर्षीयः सञ्जातः शङ्करो यदा ।
संस्कृतग्रन्थसंशोधं तदारब्ध सुदुष्करम् ॥ १ ॥

पञ्च वर्षाणि कार्येऽस्मिन् व्याप्ततोऽभून्निरन्तरम् ।
गैर्वाणीप्रेमवन्धेन न कीर्त्यै न च सम्पदे ॥ २ ॥

तृषा पिबन्नहोरात्रं साहित्यामृतनिर्झरे ।
कालिदासस्य दासोऽभूद्रसमाधुर्यनिर्जितः ॥ ३ ॥

अत एव कवीन्द्रस्य प्रबन्धान्पूर्वमग्रहीत् ।
चिकीर्षुः सर्वलोकानां सुखास्वादक्षमानमून् ॥४॥

रघुवंशमधीत्यादौ बहुभाष्यपुरस्सरम् ।
सूक्ष्मदृष्ट्या स्वयं कृत्वा गुणदोषविमर्शनम् ॥ ५ ॥

हस्तलेखांश्च सङ्गृह्य सर्वतः सुप्रयत्नतः ।
शुभं तत्कार्यमारेभे प्राच्यपाश्चात्यपूजितम् ॥ ६॥

स्वदेशस्य ऋणं पूर्वमपाकर्तुमिव श्रमैः ।
प्राचकाशदसौ काव्यमचिराट्टिप्पणीमयम् ॥ ७ ॥

सर्गाणामादिमं पङ्क्तं काव्यस्य समशोधयत् ।
आङ्ग्ललाटिनटिप्पण्या भूपितं पण्डितोचितम् ८

लाटिनीवागभिज्ञस्य तथा संस्कृतवेदिनः ।
अद्वितीयप्रबन्धोऽयं भाषाज्ञानोपकारकः ॥ ९ ॥

असमासेऽपि शेषेऽस्य प्रबन्धस्य स शङ्करः ।
शोधनं कर्तुकामोऽभून्नाटकानां महाकवेः ॥ १० ॥

श्रीविक्रमोर्वशीयस्य संशोधनमथाकरोत् ।
कुमारसम्भवस्यापि ततो मालविकस्य च ॥ ११ ॥

तत्र निर्वचनं कृत्वा सूत्रधारपदस्य सः ।
शब्दप्रवृत्तितत्त्वज्ञो व्याचख्यौ विशदं यथा ॥१२॥

महाराष्ट्रीयदेशेषु पुत्रिकाणां प्रदर्शनम् ।
क्रियते स्म पुरा सूत्रं हस्ते धारयता नृणा ॥ १३॥

नेपथ्येऽसौ नरस्तिष्ठन् नर्तयामास पुत्रिकाः ।
रङ्गे कौतुकिनो लोकान् रञ्जयन्नात्मवृत्तये ॥ १४॥

तावच्च संस्कृतज्ञेन ख्यापितं विल्सनेन यत् ।
कृतेर्मालविकाख्यायाः कालिदासो न लेखकः १५

अन्येन हि प्रणीतेयमब्दानां दशमे शते ।
न रसोऽत्र न माधुर्यं यथा तन्नाटकद्वये ॥ १६ ॥

तदेतन्मतमाङ्ग्लस्य खण्डयामास शङ्करः ।
नाटकाभ्यां कवेस्तस्य शब्दश्लोकसमुच्चयम् ॥१७॥

कृत्वा प्रयत्नतः साम्यमत्रापि समदर्शयत् ।
अपूर्वपदलालित्ये रसमाधुर्यभावने ॥ १८ ॥

सुपात्राणां समावेशे संविधानस्य कौशले ।
गुणालङ्काररसम्पत्तौ ध्वनियोगे विशेषतः ॥ १९ ॥

अन्यानि च प्रमाणानि तत्कर्तृत्वे न्यदर्शयत् ।
यथास्य नाटकस्यादौ नाम तस्यैव कीर्तितम् ॥२०॥

उपक्रमविधानं यत्तस्यान्यग्रन्थयोः समम् ।
शिवस्य स्तुतिरत्रापि स्वाहन्ताखण्डनं तथा ॥२१॥

बौद्धधर्मोन्नतेः काले तदेतल्लिखितं भवेत् ।
यत्परिव्राजिका तस्मिन् पात्रं पूज्यं हि चेष्टते २२

अतोऽर्धशतकात्पूर्वं मृतेः क्रिस्तस्य निर्मितम् ।
न दशम्यां शताब्द्यां तु यथाङ्ग्लैः कल्पितं बुधैः २३

तदा हि श्रमणी नासील्लोकसम्माननास्पदम् ।
न च तां कविरुत्कर्षेद्देशकालविचक्षणः ॥ २४ ॥

यदस्य विक्रमादित्यसभावस्थितिवादिनः ।
अर्वाचीनमिमं प्राहुस्तत्र हेतुर्विचार्यते ॥ २५ ॥

बभूवुर्बहवो भूपा विक्रमादित्यसंज्ञकाः ।
नामसाम्यभ्रमेणैते विवदन्ते मनीषिणः ॥ २६ ॥

यस्त्वष्टमशताब्दीतः पूर्वमासीन्महीपतिः ।
मालवे विक्रमादित्यो नाम सोऽन्यो ह्यविश्रुतः २७

यस्य राज्ञः सभायां तु कालिदासो व्यराजत ।
स विक्रमोऽपरश्चासीच्चक्रवर्ती सुविश्रुतः ॥ २८ ॥

स च क्रिस्तशकारम्भात्पूर्वभावी परंतपः ।
शकानां समरे हन्ता शककर्ता जगत्प्रभुः ॥२९॥

दशम्यां भोजराजेन शताब्द्यां बद्धसौहृदः ।
कविरेष बभूवेति निर्मूलं चानृतं वचः ॥ ३० ॥

मेघदूतकुमाराख्यौ तस्य काव्यमणी उभौ ।
समानौ रघुवंशस्य भातः सप्रसवाविव ॥ ३१ ॥

इति काव्यत्रयीमध्याद्रघुवंशं स शङ्करः ।
विमृशन् विमतप्रश्नान् विचिच्छेद सविस्तरम् ॥३२॥

नचिरादथ पाश्चात्या वेवर्मोक्षम्लुरादयः ।
प्राच्यभाषासभां चक्रुर्महतीं लण्डने पुरे ॥ ३३ ॥

अथ लब्धप्रतिष्ठोऽसौ पूज्यमानोऽधिकारिभिः ।
प्रातिनिध्यं समासाद्य शङ्करो लण्डनं ययौ ॥३४॥

षट्त्रिंशद्वर्षदेशीयस्तदानीमभवद्युवा ।
देवभाषाभिमानेन गच्छन् सलिलवर्त्मना ॥३५॥

सुप्रबन्धमुखेनास्मै मतभेदप्रदर्शिने ।
पाश्चात्यविबुधास्तत्र शङ्कराय यशस्विने ॥ ३६ ॥

अर्हणामर्हते चक्रुः संस्कृताभ्युदयैषिणे ।
ख्यापयन्तः शुभप्रज्ञां तस्य संस्कृतवेदिषु ॥ ३७ ॥

षण्मासाभ्यन्तरे तस्य विदेशस्थायिनो महान् ।
प्राच्यसंस्कृतिसम्प्रीतैः सञ्जातः संस्तवो जनैः ३८

अथैकस्मिन् दिने वस्तुप्रदर्शनमहागृहे ।
आङ्ग्लया योषिता दृष्टः कयाचित्स द्विजोत्तमः ३९

सा हि सत्कवयित्रीति मानिता विश्रुताऽभवत् ।
दृष्ट्वैव शङ्करं साभूच्चकिता तस्य तेजसा ॥ ४० ॥

सैकाग्रं पश्यति स्मैनं तालपत्रैः समावृतम् ।
वेदपर्णैरिवाकीर्णं साक्षाज्ज्ञानतरुं यथा ॥ ४१ ॥

संनादैस्तालपत्राणां सूच्यते स तदागमः ।
मर्मरैर्मृगसंस्पर्शो मुनीनामाश्रमे यथा ॥ ४२ ॥

अतिकौतुकिनी जाता साध्वी प्राच्यबुधोत्तमे ।
न शशाक पुनस्तस्य सद्यः परिचयार्जने ॥ ४३॥

कालेन काकतालीयस्तयोरासीत्समागमः ।
कथालापविशेषेण हर्षकारी परस्परम् ॥ ४४ ॥

नचिरान्निर्गमे प्राप्ते विदुषोऽस्य विदेशतः ।
उभौ च नव्यमैत्रीकौ परं खिन्नौ बभूवतुः ॥४५॥

स्नेहं पयोधिना दूरीकृतावपि ररक्षतुः ।
मनो हि महनीयानां प्रेमहेतुर्न सन्निधिः ॥ ४६ ॥

गतेषु त्रिंशदब्देषु मनीषिण्या तया सह ।
दैवयोगात्समाजग्मे वामनः शङ्करात्मजः ॥ ४७ ॥

अपूर्वश्रुतदृष्टं च सुहृत्पुत्रोऽयमित्यसौ ।
अनुक्तापि व्यजानात्तं चित्रलेखसमुद्यतम् ॥४८॥

भवेत्स्वप्ने कथायां वा समापत्तिः किलेदृशी ।
इदं परमहो चित्रमिति मेने स वामनः ॥ ४९ ॥

इति सौ. समायाः कृतिषु शङ्करजीवनाख्याने,
काव्यसंशोधनो नाम पञ्चमोल्लासः ॥

---

## ॥ षष्ठोल्लासः ॥

पाश्चात्यैरपि स ज्ञातः पण्डितत्वेन पण्डितैः ।
अन्वर्थीकृतवंशाङ्कः स्वदेशं पुनरायर्यौ ॥ १ ॥

विदेशे विश्रुतो विद्वान् विमलां कीर्तिमाप सः ।
स्वदेशे स्वर्चितश्चासीत्सुधीभिश्चाधिकारिभिः ॥२॥

विविधं च विदेशीयं स्वदेशीयं च वाङ्मयम् ।
वशीकृत्य बभूवासौ नचिरेण बहुश्रुतः ॥ ३ ॥

तदपूर्वपटुत्वेन विश्वविद्यालयादसौ ।
अपनीय नियोक्तव्यः पदे क्वापि महत्तरे ॥ ४ ॥

इति निश्चित्य सम्राज्ञ्याः किङ्करैरधिकारिभिः ।
त्याजितः शिक्षकोद्योगं नितरामात्मनः प्रियम् ५

नगरान्नगरं गच्छन् नियुक्तो राष्ट्रकर्मणि ।
नैपुण्यं दर्शयामास नैककार्यधुरन्धरः ॥ ६ ॥

व्यापृतो राजकार्येषु भूयिष्ठमपि वासरम् ।
कर्तुं देवगिरः सेवां यथेष्टं न शशाक सः ॥ ७ ॥

तथापि प्रेरितो भक्त्या विरामेषु दिने दिने ।
करोति स्मैव शुश्रूषां यथाकालं यथाविधि ॥ ८ ॥

प्रबन्धान् कालिदासस्य पूर्वोक्तान् परिशोध्य सः ।
ऋग्वेदं शुभमध्येतुमारेभे सूक्ष्मदृष्टितः ॥ ९ ॥

देशे जिज्ञासुभूयिष्ठे शार्मण्यानां मनीषिणाम् ।
प्रसिद्धिर्मचिरादेष भूयसीमधिजग्मिवान् ॥ १० ॥

ततः सार्धद्विवर्षान्ते श्रुतेर्निखिलमष्टकम् ।
सुबोधसरलैर्वाक्यैर्विवरीतुमुपाददे ॥ ११ ॥

मत्वा दिव्यमिदं शास्त्रं पुरुषार्थप्रसाधकम् ।
सुखबोधाय बन्धूनां सर्वेषामात्मनः सताम् ॥१२॥

महाराष्ट्रीयवाचैव व्याख्येयमिति निश्चितः ।
वहन् गुर्वीमविश्रान्तं राजकार्यधुरं दिवा ॥ १३ ॥

ऋचामुपासनानन्दे निशां चैकान्ततो नयन् ।
संहितामखिलां देशभाषया पर्यवर्तयत् ॥ १४ ॥

एवं विविधसूक्तानां शतकान्येकविंशतिम् ।
महर्षीणां शतैः प्राचां निर्मितानि तपस्विनाम् १५

विदेशीयगिरा रम्यं प्रतिमासमनूद्य च ।
बुल्वरादिप्रतीच्यानां विदुषां प्राहिणोदसौ ॥ १६ ॥

आसीत्काथवटे नाम कश्चिदस्य सुहृन्मणिः ।
चिरकालात्सहाध्यायी संस्कृतज्ञः परिश्रमी ॥१७॥

तस्य वेदार्थयत्नाख्यां मित्रस्य सहकारतः ।
अनुवादान्वितामेकां पत्रिकां समपीपदत् ॥ १८ ॥

तस्य चाभूतपूर्वस्य प्रबन्धस्य मुखे सुधीः ।
विनीतो व्यालिखद्वेदप्राधान्यख्यापनं यथा ॥१९॥

विदेश्या गृह्णते वेदानर्थबोधपुरस्सरम् ।
भारतीयास्तु दृश्यन्ते तद्विमर्शपराङ्मुखाः ॥ २० ॥

जन्मभूः सर्ववेदानामिदं भारतमण्डलम् ।
तथाप्यहो अमोघा वागियं लोकैरुपेक्ष्यते ॥ २१ ॥

पाश्चात्यापेक्षयाऽभ्यासः श्रुतीनां सुकरो हि नः ।
ज्ञानतर्पो गुरुस्तेषामस्ति नः संस्कृतिः शुभा ॥२२॥

सुबहून्वेदसम्बद्धान्पाश्चात्यै रचितान्बुधैः ।
टीकासंवलितग्रन्थान् समालोच्य पुनः पुनः २३

मया हि निरणायीदं मन्त्राः कतिपये श्रुतौ ।
न दुर्बोधाः स्वदेश्यानां यथा पश्चिमवासिनाम् २४

नव्यप्राचीनवर्गाणां भारतेऽत्र विशेषतः ।
आर्याणां न हि भेदोऽस्ति शुद्धसंस्कृतिदृष्टितः २५

परं प्राच्यप्रतीच्यानामस्ति भेदो महत्तमः ।
अत एव विदेशीया बहुश्रुतबुधा अपि ॥ २६ ॥

निर्मायापि बहून् ग्रन्थान् वैदिकान् हितकारिणः ।
न पारयन्ति वेदार्थं विज्ञातुं सूक्ष्मतत्त्वतः ॥ २७॥

सूते ज्ञानमवत्यार्तेंर्निरस्यति हृदस्तमः ।
त्रयी मूर्तिस्त्रयीवेति प्राज्ञैरुद्घुष्यते मुहुः ॥ २८॥

अन्वभावि यथानन्दः श्रुतिसंशीलनान्मया ।
तथैव बान्धवाश्चापि नन्देयुर्नात्र संशयः ॥ २९ ॥

इति संबोध्य देशीयान् मासपत्रमुखेन सः ।
आरेभेऽथर्ववेदस्य व्याख्यानं देशभाषया ॥ ३० ॥

इति सौ. क्षमायाः कृतिषु शङ्करजीवनाख्याने
श्रुतिप्रशंसनो नाम षष्ठोल्लासः ॥

---

॥ सप्तमोल्लासः ॥

तावच्च दैवयोगेन प्रेषितोऽभूत्पुरात्पुरम् ।
राजकार्यवशाद्भूयः स्वपदेऽभ्युदयं गतः ॥ १ ॥

अथास्य गृहिणी दुर्गा बत कालवशं ययौ ।
विहायोपत्रिवर्षीयां कृष्णाभिधसुतां शुभाम् ॥२॥

बालिकां बहुकार्येषु निमग्नस्य दिवानिशम् ।
रक्षितुं न गृहे नारी निपुणा काप्यवर्तत ॥ ३ ॥

राजदुर्गे निजभ्राता सीतारामस्तदावसत् ।
तदेनामस्य भार्यायाः सकाशं प्राहिणोदसौ ॥४॥

अथ गच्छति कालेऽसौ सुहृद्भिर्बोधितोऽभवत् ।
परिणेतुं पुनः काञ्चित्सुजातां विधवामपि ॥ ५ ॥

नवीनशिक्षितान्मुक्त्वा तदान्यैरखिलैरपि ।
न्यषेधि विधवोद्वाहो जनैः स्वार्थैकदृष्टिभिः ॥ ६ ॥

विधवां वोढुकामोऽपि न लेभे शङ्करस्ततः ।
कुलशीलवयोरूपैरनुरूपां वराङ्गनाम् ॥ ७ ॥

परिणेयामथान्वेष्टुं प्रवृत्तोऽभूत्कुमारिकाम् ।
बालिका च शुभा काचित्प्रदेया श्रुतिमागता

सा हि शिक्षकवर्यस्य कस्यचित्तनयाऽभवत् ।
श्रुतसद्गुणसम्पत्तेः सोलापुरनिवासिनः ॥ ९ ॥

रामचन्द्र इति ख्यातो नायकाख्यकुलोद्भवः ।
प्रियशिष्यः पिता सोऽभूत्कन्यारत्नविभूषितः १०

आसीत्तस्य द्विजेन्द्रस्य राधा नाम मनस्विनी ।
भार्या रूपगुणाचारैः श्रीमद्राधानुकारिणी ॥ ११ ॥

अनयोर्वरदम्पत्योर्विश्रुता गोजराख्यया।
सुकुमारी च कन्यासीत्पद्मिनीव मनोहरा ॥१२॥

दृष्ट्वैव बालिकामेनां कमलाक्षीं सुमध्यमाम्।
रूपसंवादिसौगुण्यां चकमे शङ्करो भृशम् ॥ १३ ॥

सम्प्रार्थ्य पितरं तस्याः शङ्करः प्राप्तसम्मतिः।
जग्राह पाणिना पाणिं शोभनायाः शुभे दिने १४

शुचिस्मितजुषस्तस्याः सुन्दर्याः शान्तचेतसः।
उषःशोभाविशिष्टाया उषानाम चकार सः ॥१५॥

त्रयोदशवयोजुष्टामपुरोज्झितमन्दिराम्।
कृपाम्र्दुरुपादाय राजदुर्गमगान्मुदा ॥ १६ ॥

यत्रासीदुक्तपूर्वो यः सीतारामः सहोदरः।
पालयन् शीलसम्पन्नो वृत्तिमर्थकरीं निजाम् १७

नवोढां सुकुमाराङ्गीं लक्षणीयां प्रभावतीम् ।
तस्थौ प्रतीक्षमाणोऽसौ सपत्नीकः कुतूहलात् १८

असाम्येऽप्युभयोः कामं दम्पत्योर्वयसा तयोः ।
तत्प्रौढाचरणाद्भेदो नाभवद्दृष्टिगोचरः ॥ १९ ॥

ननान्दृभ्रातृजायासु सपत्नीदुहितर्यपि ।
देवरेष्वप्युपादेवी विनीता प्रियमाचरत् ॥ २० ॥

सपत्नीबालिका कृष्णा वयसा पञ्चवत्सरा ।
वर्णेन यद्यपि श्यामा विशुद्धा चेतसाऽभवत् २१

सा मृगाक्षीमुपां रम्यां दृष्टमात्रां विमातरम् ।
स्नेहेन समुदाचारीच्चिरात्परिचितामिव ॥ २२ ॥

पञ्चवर्षकनीयस्यामुपा तस्यां समश्लिहत् ।
बद्धेव प्रेमपाशेन प्रगाढं पूर्वजन्मनः ॥ २३ ॥

निरूढे च तयोरेवं सख्ये महति निस्पृहे ।
आविवाहसमूत्कृष्णा विमातुः सहवर्तिनी ॥२४॥

अथ वर्षद्वयादूर्ध्वमुपाशङ्करयोर्यदा ।
पुत्रोऽजनि तदा कृष्णा जननीव जुगोप तम् २५

तनोति स्म पितुः क्लेशं बालविद्यापराङ्मुखी ।
विमातुस्तोपदात्वासीदूर्णाम्बरकरी शिशोः ॥२६॥

एकदा सुखमासीने शङ्करे पत्रमागमत् ।
सुहृन्माधवभार्याया रमादेव्याः स्वहस्ततः ॥२७॥

विषूचिकासमाक्रान्तः श्रीमान्माधवरानडेः ।
इति वार्तामतः प्राप्य व्याकुलः शङ्करोऽभवत् २८

एकतः पीडितं मित्रं त्वरया गन्तुमुत्सुकः ।
अन्यतो बालपत्नीं स्वामजिहासुरतिप्रियाम् ॥२९॥

इतिकर्तव्यतामूढः कियन्तं कालमाकुलः ।
दोलायमानचित्तोऽभूदाकृष्टः स्नेहबन्धनैः ॥ ३० ॥

यदि शीघ्रं न गच्छेयं प्रियमित्रस्य सन्निधिम् ।
चिन्तया परितप्येय पापशङ्की पदे पदे ॥ ३१ ॥

अथासौ यदि दुर्दैवादसूनेव परित्यजेत् ।
तदा दुर्लभमेव स्यात्तन्मुखस्यापि दर्शनम् ॥ ३२ ॥

अत्यन्तमनुतापाय प्रमादोऽयं भविष्यति ।
इति भूयः परामृश्य निश्चिक्ये गन्तुमेव सः ३३

निवसेह क्वचित्कालं सीतारामो ममानुजः ।
कर्ता कालविनोदं ते शीघ्रमेष्यामि मा शुचः ३४

इति प्रियां समाश्वास्य प्रतस्थे राजकोट्टतः ।
चेतसा शुभमाध्यायन्नार्तमित्रस्य नित्यशः ॥३५॥

लङ्घयन् दीर्घमध्वानं चतुःपञ्चप्रयाणकैः ।
जवात्पुण्यपुरीं प्राप सुहृद्दर्शनलालसः ॥ ३६ ॥

अथ शङ्करमालोक्य नवोद्वाहसुखोज्ज्वलम् ।
भृशमार्द्रीबभूवासौ लघूभूतरुजाव्यथः ॥ ३७ ॥

जित्वामयात्मकं शत्रुमात्मलक्ष्मीविलुम्पकम् ।
प्रियागमेन हृष्टोऽसौ निर्वृतोऽभूद्रमापतिः ॥३८॥

ततः कैश्चिदहोरात्रैः शुभोदन्तः समागतः ।
शङ्करो यन्नियुक्तोऽभूद्रायशुल्कमहालये ॥ ३९ ॥

द्विगुणं वेतनं तस्मान्नियोगादपि शङ्करः ।
इदं चोपानमद्दैवादतर्कितमयाचितम् ॥ ४० ॥

निशम्येदं रमादेवी मुदिता प्राह शङ्करम् ।
अहो पुण्योदयो भूयानुपायाः पूर्वजन्मनः ॥४१॥

इतः परमवाप्तासि द्विगुणं यद्धनागमम् ।
सौभाग्यमेव कान्तायाः स्वभर्तुः सुखकारणम् ४२

सुहृत्पत्न्या वचः श्रुत्वा रमादेव्याः सुमङ्गलम् ।
प्रत्याह शङ्करो भद्रे ब्रूपे सत्यं प्रियं च मे ॥ ४३ ॥

धन्योऽहं यद्रमादेवि सुहृदौ प्राप्तवानहम् ।
माधवं भवतीं चापि प्राणेभ्योऽप्यधिकप्रियौ ४४

कृत्वा विदितवृत्तान्तं सीताराममथानुजम् ।
मुम्बापुरीमुपाक्रण्णे प्रेषयेति तमादिशत् ॥ ४५ ॥

तत्र भूयः स गार्हस्थ्ये सुखितः पर्यवस्थितः ।
रघुवंशस्य पट्सर्गानवशिष्टानुपाददे ॥ ४६ ॥

इति सौ. रमाया- कृतिषु शङ्करजीवनाख्याने
द्वितीयपाणिग्रहणो नाम सप्तमोल्लासः ॥

## ॥ अष्टमोल्लासः ॥

एकदा राजकार्येण बिजापुरमधिष्ठितः ।
ताम्रशासनवृत्तान्तमेकं शुश्राव लोकतः ॥ १ ॥

पुरा कृषीवलस्येदं कस्यचित्करमागतम् ।
स्वक्षेत्रे कर्षतो ग्रामे तिलगुण्डीति विश्रुते ॥ २ ॥

आसीद्ग्रामटिका सेयं दशक्रोशान्तरे पुरात् ।
यत्र लेख्यमिदं दैवात्क्राम्यति स्म करात्करम् ॥३॥

आकस्मिकमिदं वृत्तं शासनस्य निशम्य सः ।
तदीप्सुरभवद्यत्नात्तृषार्तः सलिलं यथा ॥ ४ ॥

महार्हमिति तद्भूमौ निचखान कृषीवलः ।
चिराय तच्च भूगर्भे लीनं निधिरिव स्थितम् ॥५॥

स कदाचिदिदं लोभाद्रक्षितुं चोरवर्गतः ।
स्वयं गर्तात्समुद्धृत्य ततो ग्रामान्तरं ययौ ॥६॥

तच्च तत्र विचिकीर्षुः स्वर्णतुल्यं विभाव्य सः ।
दर्शयामास लोकेभ्यो रत्नं गारुडिको यथा ॥७॥

न कोऽपि नगरावासी व्यश्वसीत्तदनर्घताम् ।
अथ क्षेत्री तदुद्विग्नो वार्धुषौ बन्धनेऽक्षिपत् ॥८॥

देयं तु नियते काले प्रत्यर्पयितुमक्षमः ।
न्यासत्यागेन मुक्तोऽभूद् ऋणतः स कृषीवलः ९

यत्पुरा कृतयत्नोऽपि न लेभे वस्तु शङ्करः ।
तदेव सुमुखे दैवे सुखेन प्राप वार्धुषेः ॥ १० ॥

तद्रत्नं विषयं दृष्ट्वा बभूवानन्दतुन्दिलः ।
अमूल्यं संस्कृतज्ञानां मणिज्ञानां मणिर्यथा ॥११॥

आसीद्विक्रयलेखोऽयं येन चालुक्यवंशजः ।
मुञ्जो नाम महीपालो ग्रामवृन्दं वितीर्णवान् १२

कणसामन्तसंज्ञाय कस्मैचिद्देवडाह्वयम् ।
गुणदिग्गजशून्येन्दुमिते संवत्सरे पुरा ॥ १३ ॥

ताम्रलेखमिमं सर्वमितिहासार्थसंयुतम् ।
यत्नादाङ्ग्लेयभारत्या शङ्करः पर्यवर्तयत् ॥ १४ ॥

प्राकाशयदथेदं च कस्मिंश्चिन्मासपत्रके ।
वर्लीनाकादमीनामपत्रिकायां ततः पुनः ॥ १५ ॥

जेस्लमीराख्यशार्मण्यनगरे चिरकालतः ।
भण्डारं हस्तलेखानामासीदिति विवेद सः ॥१६॥

आसन् ग्रन्थालये तस्मिन् पोषिते बुल्वरादिभिः ।
काव्यनाटकशास्त्राणां हस्तलेखाः सहस्रशः ॥१७॥

---

१ गुणास्त्रयः, दिग्गजा अष्टौ शून्यं बिन्दुः, इन्दुरेक, इति सङ्केतमाश्रित्य वामतो गत्वा अष्टत्रिंशदुत्तरैकसहस्र ( १०३८ ) सङ्ख्या विवक्षिता भवति ।

लुण्ठिताः सर्व एवैते पाश्चात्यैर्भारतादिति ।
अवधार्य स तत्त्वेन विषादमगमद् भृशम् ॥ १८॥

अथ त्रैमासिके पत्रे रानडेसुप्रचारिते ।
विवव्रे वञ्चनावृत्तिं विदेशविदुषां यथा ॥ १९ ॥

शङ्करस्य लेखः ॥

भारतस्यावशिष्टोऽयं हस्तलेखात्मको निधिः ।
बहिर्निस्सरणाद्यत्नै रक्षणीयोऽधिकारिभिः ॥ २० ॥

रिक्थमेतदमूल्यं नः पूर्वजेभ्यः समागतम् ।
भूतिकामैस्तदस्माभिर्गोपनीयं प्रयत्नतः ॥ २१ ॥

हस्तलेखनिधिस्थानाद्ग्रन्थरत्नानि भारतात् ।
हृतानि च ह्रियन्ते च पाश्चात्यैर्भूरिशः किल ॥ २२

निषेद्धव्या इमेऽस्माभिः परस्वापजिहीर्षवः ।
अध्रुवं यातु नो वित्तं न पुनर्वाङ्मयो निधिः २३

अहो निन्द्यमिदं चौर्यं परतन्त्रप्रजाग्रहात् ।
कः साधुर्बालकं लुण्ठेद्विवशं रत्नभूषितम् ॥ २४ ॥

शोचनीयमिदं नूनं यदाङ्ग्लान्वचनच्छलैः ।
प्रलोभ्य लघुमूल्येन हरेयुस्ते परं निधिम् ॥२५॥

श्रूयते हि बुधः कोऽपि प्रतीच्यो हागनामकः ।
जहार हस्तलेखानां राशिमीदृशवर्तनैः ॥ २६ ॥

अथास्य मरणादूर्ध्वं भार्या तल्लेखविक्रयात् ।
लेभे लक्षाधिकद्रव्यं ग्रन्थकोशान्म्युनिक्पुरे ॥२७

कथमीदृशमन्याय्यं दण्डनीयं न दण्ड्यते ।
नास्ति किं भारते विद्वान् लेखानामुपयोगवित् २८

लेखानां प्रतिरूपाणि काममादाय यान्त्विमे ।
मूलं न हर्तुमर्हन्ति लिखितं ग्रन्थकर्तृभिः ॥२९॥

भारतीयदशामेवमनुशोचन् स शङ्करः ।
निनिन्द निर्भयं हूणान् हस्तलेखापहारिणः ॥३०॥

कालेन देशजोऽस्माकं भविष्यत्येव शोधकः ।
रत्नानि यः समुद्धृत्य दर्शयेद्वाङ्मयोदधेः ॥ ३१ ॥

अतो लोकहितार्थाय प्रकल्प्यं राजशासनम् ।
इति न्यायोर्जितैर्वादैः शङ्करः समसूचयत् ॥३२॥

इति सौ. क्षमायाः कृतिषु शङ्करजीवनाख्याने
प्राचीनलेखगवेषणो नामाष्टमोल्लासः ॥

---

निषेद्धव्या इमेऽस्माभिः परस्वापजिहीर्षवः।
अध्रुवं यातु नो वित्तं न पुनर्वाङ्मयो निधिः २३

अहो निन्द्यमिदं चौर्यं परतन्त्रप्रजागृहात्।
कः साधुर्बालकं लुण्ठेद्विवशं रत्नभूषितम् ॥ २४ ॥

शोचनीयमिदं नूनं यदज्ञान्वचनच्छलैः।
प्रलोभ्य लघुमूल्येन हरेयुस्ते परं निधिम् ॥२५॥

श्रूयते हि बुधः कोऽपि प्रतीच्यो ह्यगनामकः।
जहार हस्तलेखानां राशिमीदृशवर्तनैः ॥ २६ ॥

अथास्य मरणादूर्ध्वं भार्या तल्लेखविक्रयात्।
लेभे लक्षाधिकद्रव्यं ग्रन्थकोशान्म्युनिकपुरे ॥२७

कथमीदृशमन्याय्यं दण्डनीयं न दण्ड्यते।
नास्ति किं भारते विद्वान् लेखानामुपयोगवित् २८

लेखानां प्रतिरूपाणि काममादाय यान्त्विमे ।
मूलं न हर्तुमर्हन्ति लिखितं ग्रन्थकर्तृभिः ॥ २९॥

भारतीयदशामेवमनुशोचन् स शङ्करः ।
निनिन्द निर्भयं क्रूणान् हस्तलेखापहारिणः ॥३०॥

कालेन देशजोऽस्माकं भविष्यत्येव शोधकः ।
रत्नानि यः समुद्धृत्य दर्शयेद्वाङ्मयोदधेः ॥ ३१ ॥

अतो लोकहितार्थाय प्रकल्प्यं राजशासनम् ।
इति न्यायोर्जितैर्वादैः शङ्करः समसूचयत् ॥३२॥

इति सौ. क्षमायाः कृतिषु शङ्करजीवनाख्याने
प्राचीनलेखगवेषणो नामाष्टमोल्लासः ॥

---

## ॥ नवमोल्लासः ॥

अथ कार्यवशादस्मिन् खानदेशमधिष्ठिते ।
बभूव सहसोत्पातः कश्चिद्विश्वभयङ्करः ॥ १ ॥

अदूरे धुलियाग्रामाद्वर्षाकाले समागते ।
एका नदी प्रवृद्धाभून्महौघेन भयानका ॥ २ ॥

नदीमुभयतो ग्रामाः केचिदासन् परिप्लुताः ।
जलौघेन कुटीराणि विध्वस्तानि बहूनि च ॥ ३ ॥

जलप्रलयतुल्येऽस्मिन् सङ्कटे ग्रामवासिनः ।
निपेतुः सलिले भ्रान्ताः परं पारं यियासवः ॥४

महासत्त्वाः परे केचिज्जलौघेन युयुत्सवः ।
बभूवुः क्षिप्तपर्यस्ता विवशा मरणोन्मुखाः ॥ ५ ॥

गृहेभ्यो निर्गता ये तु प्रत्यायाताः कुटुम्बिनः ।
नदीप्रकोपमालोक्य स्थितास्ते मुग्धचेतसः ॥ ६ ॥

श्रुतमात्रेऽथ वृत्तान्ते त्यक्त्वा कार्याणि शङ्करः ।
नाविकैः सह निष्णातैः सरित्तीरमुपागमत् ॥ ७ ॥

दत्त्वा तेभ्यः प्लवान् प्राह शङ्करः प्रौढया गिरा ।
प्रयात त्वरितं सर्वे रक्षतागतिकान् जनान् ॥ ८ ॥

इत्युक्त्वा स्वयमासीनः प्लवेऽन्यस्मिन् विनिर्भयः ।
प्राणसंशयमारूढो जलौघमभिसम्प्लवन् ॥ ९ ॥

मज्जतो विवशान्मर्त्यानूर्ध्वमाकृष्य धारयन् ।
दीनानुद्धृत्य वेगेन स्वप्लवं पर्यपूरयत् ॥ १० ॥

प्रापय्य तान्नदीतीरमवगाह्य पुनर्जले ।
भूयश्चान्यान्समानैषीद्रक्षिता मरणोन्मुखान् ॥ ११

निनाय दिवसं कृत्स्नं गतागतपरिश्रमैः ।
प्रेरयन्नाविकांश्चापि निर्धूय सुखमात्मनः ॥ १२ ॥

जले वीक्ष्य भयाक्रान्तान्मग्नोन्मग्नकलेवरान् ।
अवप्लुत्य स्वयं वेगान्नदीष्णस्तानतारयत् ॥ १३ ॥

बालकान्मूर्च्छितान् कांश्चिदुडुपात्पतितान् पुनः ।
केशग्राहं समुद्धृत्य जीवयामास यत्नतः ॥ १४ ॥

बहूनेवं समुत्तार्य वलबुद्धिपराक्रमैः ।
ब्राह्मणोऽपि यशः प्राप शङ्करः क्षत्रियोचितम् १५

कर्षकाणामयं ग्रामः कोसंवीति सुविश्रुतः ।
इत्थं निर्मार्जितः पूरैर्नामशेषोऽभवत्किल ॥१६॥

क्षेत्रावलम्बिनः सर्वे नष्टसर्वधना अपि ।
प्राणसंरक्षणादेव परमानन्दमाप्नुवन् ॥ १७ ॥

अचिन्त्यदुर्दशामेषां दृष्ट्वाचिन्तयदार्द्रधीः ।
सदुपायं निवासार्थे दीनग्रामनिवासिनाम् ॥१८॥

स्वाधिकारबलादर्थं समुत्पाद्याविलम्बितम् ।
पुनरुत्थापयामास तद्ग्रामं शङ्करः स्वयम् ॥ १९ ॥

सुखमावासिताः सर्वे कृतज्ञा ग्रामिकास्ततः ।
चक्रुः शङ्करपेठाख्यं ग्रामं नूतनकल्पितम् ॥ २० ॥

इदं कदाप्यविस्मर्यं कर्म तिष्ठति शाश्वतम् ।
प्रत्युत्पन्नमतेस्तस्य धार्मिकस्य मनस्विनः ॥ २१ ॥

अद्यत्वे विद्यते ग्रामः सोऽयं जनसमृद्धिमान् ।
तथापि कति वा विद्युः पुरावृत्तमिदं जनाः ॥२२॥

अथैकदा स्थिते तस्मिन् कार्ययोगाद्द्विजापुरे ।
अनावृष्टिवशात्तत्र दुर्भिक्षं समजायत ॥ २३ ॥

क्षुधया पीडिता लोका अस्थिशेषकलेवराः ।
मक्षिकानिर्विशेषेण म्रियन्ते स्म प्रतिक्षणम् ॥२४॥

न पूर्वमनुभूतोऽभूदीदृक्कालविपर्ययः ।
मेनिरे तदमुं लोकाः प्रकोपं दैवसम्भवम् ॥२५॥

सङ्कटे घोररूपेऽस्मिन्नुपकर्तुं प्रजाः पुनः ।
धर्मबुद्ध्या प्रवृत्तोऽभूदविश्रान्तं स शङ्करः ॥ २६ ॥

अटता प्रत्यहं तेन ग्रामे ग्रामे प्रयत्नतः ।
दृश्यते स्म बुभुक्षूणामवस्थात्यन्तदुःसहा ॥ २७ ॥

प्रभूतं धनमाढ्येभ्यो ग्राहं ग्राहं सुसत्वरम् ।
दीनेभ्यो दापयामास वस्त्रमन्नं च शङ्करः ॥२८॥

प्रशंसां महतीं चक्रुस्तस्य राजाधिकारिणः ।
कृतज्ञाश्च जना दीनास्तमाशीर्भिरवर्धयन् ॥२९॥

अथैकस्मिन् दिने तस्य सहसा गृहमागतः ।
वेस्राप इति विख्यातः कश्चिदाङ्ग्लो दिदृक्षया ॥३०॥

निशम्य श्रुतपूर्वं तन्नाम भृत्यमुखादसौ ।
तद्व्यक्तेरनभिज्ञानादीषद्भ्रान्त इवाभवत् ॥ ३१ ॥

भूयो भूयश्च तन्नाम गृणन् स्वयमचिन्तयत् ।
अहो श्रुतिपथं नूनं नाम निश्चितमागतम् ॥३२॥

न स्मरामि पुनः कोऽयं पुरुषः स्यादुपागतः ।
इत्यागमयदाङ्ग्लं तं किङ्करेण स्वसन्निधिम् ॥३३॥

आङ्ग्ले प्रविष्टमात्रेऽस्मिन् प्रकोष्ठं शङ्करो निजम् ।
बभूव चकितोऽत्यन्तं प्रेतदर्शी नरो यथा ॥३४॥

स एवायं हि गर्विष्ठः शङ्करो येन निर्दयम् ।
पूर्वमष्टादशाब्देभ्यो निरकास्यत मन्दिरात् ॥३५॥

स एवाद्य विनीतः सन् शङ्करं समुपस्थितः ।
प्राञ्जलिश्च जगादैतं सादरं मृदुभाषया ॥ ३६ ॥

अयि भोः क्षम्यतामार्य स्थितोऽन्धः प्रागयं जनः ।
येन मन्दधिया ज्योतिर्भवदीयं न लक्षितम् ३७

भवदीयमनीषार्ककिरणा हृदये मम ।
तमोमये कथं नाम नाविशन्निति विस्मये ॥३८॥

प्रार्थयेऽहमतः सौम्य पुनश्च भवतः क्षमाम् ।
उदारचेतसा श्रीमन् क्रियतां मय्यनुग्रहः ॥३९॥

निशम्य प्राञ्जलेस्तस्य वचनं नम्रचेतसः ।
सस्मितः शङ्करोऽवादीत्तमाङ्ग्लेयाधिकारिणम् ४०

मदर्थे भवता चिन्ता नैव कार्या महोदय ।
कदापि नापराद्धं मे भवता हि मनागपि ॥ ४१ ॥

अहो निष्कासितः पूर्वं नाभविष्यं यदि त्वया ।
आङ्ग्लभाषानभिज्ञः सन्नजीविष्यं मुधैव हि ४२

तदा मे भवतः कृत्यं प्रत्यभादपकारवत् ।
वस्तुतस्तु त्वयादर्शि मयि भूयाननुग्रहः ॥ ४३ ॥

प्रथमे वयसि प्राज्ञैरभूवं यन्निराकृतः ।
तदेव मे शुभोदर्कं पर्यणंसीत्सुदैवतः ॥ ४४ ॥

इति प्रतिवदन्नाङ्ग्लं विधाय भृशविस्मितम् ।
हस्तेन हस्तमालम्ब्य तेन मैत्रीं बबन्ध सः ॥४५॥

इति सौ. क्षमायाः कृतिषु शङ्करजीवनाख्याने
लोकसङ्कटनिवारणो नाम नवमोल्लासः ॥

## ॥ दशमोल्लासः ॥

अथ प्राचीनलेखानां शोधनोद्यमतत्पराः ।
श्रीभाण्डार्करतेलंगप्रमुखाः केचिदुत्थिताः ॥ १ ॥

न्यरुत्स्यन्त न चेदेतैर्लेखा निस्सरणादितः ।
अभविष्यन् वरग्रन्था बहिःकर्णपथादपि ॥ २ ॥

उद्बोधिता बुधास्त्वेते शङ्करस्य सदुक्तिभिः ।
लेखानन्वेषमन्वेषं शोधनानि प्रचक्रिरे ॥ ३ ॥

अथ कैश्चिद्सौ वर्षैर्भाषाणामनुपूर्वशः ।
विधाय शङ्करोऽभ्यासं बभूवानेकवाक्प्रभुः ॥ ४ ॥

चतुर्दशगिरां वेत्ता न्ययोजि प्रमुखे पदे ।
मुम्बापुर्यामसौ प्राच्यभाषाणां परिवर्तकः ॥ ५ ॥

पदमेतदतिश्रेष्ठं मन्यते स्म पुरा जनः ।
यदासीत्कार्यभारोऽस्य पण्डितेतरदुर्वहः ॥ ६ ॥

ऋजुर्विस्पष्टवक्ता च विनीतः प्राज्ञपुङ्गवः ।
शासकैः सत्यसन्धोऽयं पदयोग्योऽभिमानितः ॥७॥

पदमुच्चमधिष्ठाय व्यवजह्रेऽधिकारिभिः ।
निर्भयं राजभृत्योऽपि देशकल्याणकाम्यया ॥ ८ ॥

यद्वदन्ति जना मानी सत्यवान्दुष्टवर्जकः ।
राजकीयपदे स्थातुं न शक्नोतीति तन्मृषा ॥ ९ ॥

शङ्करो हि महामानी नितरामनृताक्षमी ।
दुष्कृतां परिपन्थी च पदे महति सुस्थितः ॥१०॥

संस्कृतानन्यवागार्थी ख्यातिलोभविवर्जितः ।
अकरोदात्मनः कार्यं निखिलेनान्तरात्मना ॥११॥

रक्षिताऽनाथसाधूनां परिहर्ता च दुष्कृताम् ।
असोढाऽनृतवक्तॄणामधृष्योऽभूत्स कर्मसु ॥ १२ ॥

विदेश्यं वा स्वदेश्यं वा कामवृत्तिं स शङ्करः ।
तपति स्म ऋजुर्वाचा प्रौढतेजोविशिष्टया ॥ १३ ॥

अदोषे प्रहरिष्यन्तं हूणमप्यधिकारिणम् ।
प्रतिरुध्य स वाग्बाणैरवति स्म निरागसम् ॥१४॥

शुभमावसथं प्राप्य सकुटुम्बः सुखी वसन् ।
शङ्करो बन्धुवात्सल्याद्बान्धवानप्यपोषयत् ॥१५॥

आसीदेकतमस्तेषां घनश्यामः सहोदरः ।
मुम्बापुर्यामधीयानो विश्वविद्यालये क्वचित् ॥१६॥

आह्वयन्ननुजं प्रीत्या घनुरित्येकदेशतः ।
सदा साक्षात्पितेवास्य योगक्षेममुवाह सः ॥१७॥

बहुकार्यनिमग्नोऽयमलब्धावसरोऽनुजम् ।
स्नानकाले यथायोगं शिक्षयामास नित्यशः ॥१८॥

धर्मपत्नीमुपादेवीं स्पृशत्प्रथमयौवनाम् ।
स्वयं प्रावर्तयत्पाठे शिक्षणे सुविचक्षणः ॥ १९ ॥

अनत्यभ्यस्तविद्या सा सपत्नीसुतया ततः ।
आपुत्रप्रसवं विद्यामन्दिरं नियमादगात् ॥ २० ॥

अथास्य दुहिता कृष्णा बभूव प्राप्तयौवना ।
प्रदेया सा च कस्मैचित्सज्जनायेति चिन्तयन् ॥२१॥

शङ्करः सद्वरं यत्नादन्वेष्टुमुपचक्रमे ।
अथ विद्यार्थिनं कञ्चित्सुविनीतं द्विजात्मजम् ॥२२॥

प्राप्य सत्कुलसम्भूतं दत्तात्रेयाह्वयं वरम् ।
प्रददौ विधिना तस्मै कुमारीं शोभने दिने ॥२३॥

स्वभर्तुरसमानत्वाद्विद्याभ्यासविधेरसौ ।
नवोढा बालिका कृष्णा न्यवसज्जनकालये ॥२४॥

यथापुरमसौ साध्वी पितृशुश्रूषणे रता ।
विमातृजानपि स्निग्धा विनिन्ये सोदरानिव ॥२५॥

अचिरादथ तत्कालमेका संस्थापिताऽभवत् ।
संस्था श्रीरानडेभाण्डार्करशङ्करपूर्वकैः ॥ २६ ॥

आर्यधर्मप्रचाराय समाजस्य च शुद्धये ।
सा प्रार्थनासमाजाख्या ख्यापिता नव्यशिक्षितैः२७

ततः प्रागेव वङ्गेषु संस्थां श्रीराममोहनः ।
एकां ब्रह्मसमाजाख्यां प्रतिष्ठापितवान् सुधीः २८

तत्समाजमवष्टभ्य पूर्वोक्तैर्हि विनिर्मितम् ।
संभूयप्रार्थनाहेतोर्मुम्बापुर्यां सुमन्दिरम् ॥ २९ ॥

मण्डलस्य नवीनस्य तत्त्वमासीत्सुमुख्यतः ।
मूर्तिपूजावहिष्कारो भ्रातृभावश्च सर्वतः ॥ ३० ॥

स्त्रियश्च पुरुषाश्चापि प्रयताः शुभ्रवाससः ।
नियमात्प्रतिसप्ताहं समाजग्मुः समूहशः ॥ ३१ ॥

प्रार्थनामन्दिरं काले प्रार्थनाय जगत्पतेः ।
तथा सदुपदेशस्य श्रवणाय मनीषिणाम् ॥ ३२ ॥

प्राचीनसम्प्रदायस्थाः केचिच्चिप्लुणकरादयः ।
निनिन्दुः समितिं नव्यां पुरोभागित्वमाश्रिताः ३३

तथाहि तेऽब्रुवन् भो भोः पश्यतेमान् विलक्षणान् ।
सर्वदैवान्धवन्म्लेच्छक्रिस्ताचारानुकारिणः ॥ ३४ ॥

किं त्यागेन स्वदेवानां स्थापितानां गृहे चिरात् ।
किं गत्वा मन्दिरं शून्यं स्मरणाय जगत्पतेः ३५

नार्यो ह्यर्चितुमर्हन्ति स्वस्वगेहेष्ववस्थिताः ।
तुलसीवटसावित्रीदुर्गादिकुलदेवताः ॥ ३६ ॥

अथ तं विमतप्राज्ञं चिप्लुणकरमहाशयम् ।
शङ्करः कुशलो वादे प्रत्युवाच सदुत्तरम् ॥ ३७ ॥

अयं सनातनो धर्मो न पुनः कोऽपि नूतनः ।
देवं विश्वविधातारमेकमेव वयं स्तुमः ॥ ३८ ॥

उत्सवेषु पुरा तद्वद्यागहोमार्चनेषु च ।
स्त्रियोऽपि मिलिता एव पुरुषैः संव्यवाहरन् ॥३९॥

अनादिकालमारभ्य प्रार्थनास्तुत्युपासनाः ।
सम्भूयैव क्रियन्ते स प्रमाणं श्रुतिरेव नः ॥४०॥

कण्वगोतमसन्तानाः संजग्मुः क्रतुमन्दिरम् ।
जगदीश्वरपूजार्थमिति हि श्रूयते कथा ॥ ४१ ॥

यात्राश्च सह पत्नीभिः क्रियन्ते स्म समूहशः ।
अद्यापि सम्मिलन्ति स्त्रीपुरुषा हरिकीर्तने ॥४२॥

अतो नास्मत्समाजेन किञ्चिदन्यदनुष्ठितम् ।
प्राचीनसंप्रदायस्य पुनरुज्जीवनादृते ॥ ४३ ॥

एवं हि शङ्करो विद्वान् प्रार्थनामन्दिरे मुहुः ।
निरस्यन् विमताक्षेपानिमां संस्थामसेवत ॥४४॥

इति सौ. क्षमायाः कृतिषु शङ्करजीवनाख्याने
शङ्करप्रकृतिवर्णनो नाम दशमोल्लासः ॥

## ॥ एकादशोल्लासः ॥

स्त्रीभिराङ्ग्लेयविद्यायाः शिक्षणं भूरिसाधकम् ।
इति स्वानुभवाज्जानन् प्रयेते तत्प्रसारणे ॥ १ ॥

आङ्ग्लवाणीविदः पूर्वं वर्षेभ्यः पञ्चसप्ततेः ।
नावर्तन्ताङ्गनाः काश्चित्सुशालानामभावतः ॥ २ ॥

एकैव कन्यकाशाला मुम्बापुर्यामभूत्पुरा ।
अल्पा एवाङ्गनास्तस्मादाङ्ग्लभाषाविदोऽभवन् ३

आङ्ग्लविद्यालयस्तादृक् कन्याभ्यः पुण्यपत्तने ।
निर्मेय इति निश्चित्य शङ्करस्तीव्रमुद्यतः ॥ ४ ॥

श्रीमान् वेडरबर्नाख्यो बभूव सचिवोत्तमः ।
हितैषी भारतीयानां स्वयमाङ्ग्लोऽप्युदारधीः ॥५॥

सोऽयं विज्ञापितोऽर्थं च शङ्करेण विनिश्चितम् ।
कन्यामन्दिरनिर्माणं सपद्येवान्वमोदत ॥ ६ ॥

ददौ दश सहस्राणि रूप्यकाणामसौ मुदा ।
विद्याप्रचारसिद्धयर्थे महात्मा भारतप्रियः ॥ ७ ॥

प्रहृष्टः शङ्करश्चापि त्रिसहस्रमदात्स्वयम् ।
सञ्चिकाय ततः शीघ्रं सार्धलक्षं च लोकतः ॥८॥

सञ्चितेनाथ वित्तेन मित्राणां सहकारतः ।
विद्यामन्दिरनिर्माणे प्रवृत्तोऽभवदुद्यमी ॥ ९ ॥

पुण्यपत्तनमध्यस्थे हुजुर्वागेतिसंज्ञिते ।
निर्ममे मञ्जुलोद्देशे विद्यागारं सुशोभनम् ॥१०॥

कस्मिंश्चिद्दिवसे पुण्ये शारदेन्दुविनिर्मले ।
वेदाष्टवसुचन्द्राब्दे[1] हौणे नवममासके ॥ ११ ॥

[1] अनेन १८८४ संख्या निर्दिष्टा ।

कन्याविद्यालयस्यासीत्प्रवेशसुमहोत्सवः ।
लौकिकानां सहस्राणां परमानन्ददायकः ॥ १२ ॥

अपूर्वा चाद्वितीया च स्वल्पकालेन चोत्थिता ।
संस्थेयं महदाश्चर्यं लोकानामुदपादयत् ॥ १३ ॥

शिक्षणागारबाहुल्यादद्यत्वे विस्मयं जनः ।
न कोऽपि कुरुते दृष्ट्वा संस्थानिर्माणमीदृशम् १४

पुरा तु विरलत्वेन स्त्रीविद्याभ्यासपद्धतेः ।
प्रत्यभादद्भुता संस्था शङ्करश्रमशंसिनी ॥ १५ ॥

अथैका समितिः कार्यनिर्वाहाय विनिर्ममे ।
मण्डिताऽनेकविद्वद्भिरन्यैरुत्साहिभिस्तथा ॥ १६ ॥

श्रीरानडेप्रभृतिभिः समितेरधिकारिभिः ।
शङ्करस्तत्पदार्हत्वात्संस्थासञ्चालकः कृतः ॥ १७ ॥

हन्त विश्वजनीनं तत्कार्यमङ्गीचकार सः ।
अवितर्कितवर्षान्तभाविक्लेशपरम्परः ॥ १८ ॥

तृणप्रायोऽपि वृत्तान्तः कदाचिद्दारुणो भवेत् ।
साधुश्च दोषहीनोऽपि जायेत क्लेशभाक् तथा १९

तथा हि निश्चितं सङ्घे संस्थाया वार्षिकोत्सवे ।
पारितोषिकदानेन प्रोत्साह्या बालिका इति ॥२०॥

श्रीसयाजीमहीपालो न्यमन्त्रि च वटोदरात् ।
अग्रासनमलङ्कर्तुं विद्वन्नृपपुरोगमः ॥ २१ ॥

अथ सज्जीकृते सम्यक्कार्यसञ्चालनक्रमे ।
भल्लूकः शिवपूजायामिवाङ्ग्लः कश्चिदागतः ॥२२

स हि लीवार्नराख्योऽभूत्तरुणो राजकिङ्करः ।
विद्याभ्यासविभागस्य प्रधानः पर्यवेक्षकः ॥ २३ ॥

विद्विष्टा भारतीयानां विदुषां तु विशेषतः ।
निर्धनानां निराकर्ता प्रतिष्ठावस्तु मत्सरी ॥२४॥

अथ किं नु विचित्रं चेद्विप्रकुर्यादयं शठः ।
अव्यापारेऽपि चापल्याद्व्यापारं कर्तुमुत्सुकः॥२५॥

अयि भोः सूचनापत्रमयोग्यं प्रतिभाति मे ।
मदोन्मत्तैर्हि युष्माभी राजगीतं विवर्जितम्॥२६॥

आदौ तद्गीयतां नो चेद्गापयिष्याम्यहं स्वयम् ।
इति सन्तर्जयामास शालाकार्याधिकारिणः ॥२७॥

व्याचख्यौ शङ्करस्तस्मै तद्विवर्जनकारणम् ।
गीतस्याश्रुतपूर्वत्वान्नियमानामवेदिनः ॥ २८ ॥

नोत्तिष्ठेयुः समं गीतेः कीर्तनावसरे जनाः ।
इति शङ्कासमाक्रान्तैरस्माभिः सा विलोपिता २९

इति वादिनि तत्त्वेन शङ्करे वानरोऽब्रवीत् ।
क्रियतां तर्हि भाषायां राष्ट्रगीतेर्विवर्तनम् ॥ ३० ॥

शङ्कर उवाच ॥

कथमाङ्ग्ला विजानीयू राष्ट्रगीतिं विवर्तिताम् ।
अनभिज्ञा हि ते देशभाषाणामविशेषतः ॥ ३१ ॥

उत्तिष्ठेयुरतः केचिन्निषण्णाः स्युः परे तथा ।
मा भूत्सदसि विक्षोभ इति तत्खलु वर्जितम् ॥३२॥

विघ्नबीजमुपक्षिप्य प्रचलन्मङ्गलोत्सवे ।
सहसोत्थाय मत्तोऽयमगर्जद्वातुमुद्यतः ॥ ३३ ॥

समूहं चकितं दृष्ट्वा हसस्य कपिचेष्टया ।
चुक्रुधुः कार्यकर्तारः शङ्करेण पुरस्कृताः ॥ ३४ ॥

कन्दुका इव पाश्चात्याः समुत्पेतुः स्वपीठतः ।
तदाचारविदः केचिदुत्तस्थुर्देशजा अपि ॥ ३५॥

इतिकर्तव्यमूढास्तु पौराः केचिद् गृहं ययुः ।
सम्मुग्धाः कीटवत्तस्थुः पीठलग्नास्तथाऽपरे ॥३६॥

व्यर्थयन्नधिकारेण प्रमत्तोऽसौ महोत्सवम् ।
दुर्मेधाः समितिं सर्वामनैषीदुपहास्यताम् ॥ ३७॥

अतृप्तः कर्मणानेन द्विपाणो देशजान्मृदून् ।
कर्तुं भूयोऽपि विध्वंसं प्रवृत्तोऽभूदनागसाम् ३८

आङ्ग्लेये दैनिके पत्रे प्राकाश्यमुपनीतवान् ।
शङ्करत्रासनं लेखं निन्दनोक्तिपरिप्लुतम् ॥ ३९ ॥

अणुं च पर्वतीकुर्वन् राजद्रोहीति शङ्करम् ।
घोषयामास सर्वाङ्ग्लांश्चिकीर्षुस्तद्विरोधिनः ४०

अथैष क्षुद्रवृत्तान्तः सलिले तैलबिन्दुवत् ।
विसर्पन् सर्वतः शीघ्रं प्राप रूपं भयङ्करम् ॥ ४१॥

राजप्रतिनिधे राज्ञा ततः शङ्करमागमत् ।
राष्ट्रगीतविलोपस्य कारणं कथ्यतामिति ॥ ४२ ॥

प्रवृत्तेऽथ तयोर्मध्ये विवादे पत्रलेखनैः ।
मित्रानुमोदनं प्राप्य शङ्करोऽदात्सदुत्तरम् ॥ ४३ ॥

परन्तु दुष्टसङ्कल्पैः कुटिलैरधिकारिभिः ।
कलुषीक्रियते हन्त साधोरपि मनः प्रभोः ॥४४॥

आङ्ग्लाधिकारिणो नूनं निपुणाः स्वार्थसाधने ।
तिले तालं हि पश्यन्तः करिष्यन्त्यधरोत्तरम् ॥४५॥

परपिण्डोपभुग् यः स्यात्स्वतन्त्रः स कथं भवेत् ।
त्यक्त्वा मानापमानं च सोऽनुवर्तेत शासकम्॥४६॥

आत्मनोऽभ्युदयार्थं वा स्वीयदेशहिताय वा ।
नहि स्वयं पराधीनः प्रवर्तितुमिहार्हति ॥ ४७ ॥

शङ्करस्तु स्वतन्त्रोऽभूद्राजभृत्योऽपि सत्यवान् ।
अत एव बत व्याजैः पदान्निष्कासितोऽभवत् ४८

स्वजातिपक्षपातोऽयमहो आङ्ग्लाधिकारिणाम् ।
अन्याय्यस्य परां कोटिं श्रयन्ते यन्निरर्थकम् ॥४९॥

इति सौ. क्षमायाः कृतिषु शङ्करजीवनाख्याने
राजप्रकोपसमुत्थापनो नामैकादशोल्लासः ॥

## ॥ द्वादशोल्लासः ॥

तस्मिन् शुद्धात्मनि प्राज्ञे निरागसि निराकृते ।
उद्बभूव तदा लोके विक्षोभः सुमहत्तमः ॥ १ ॥

धिगन्याय्यमिदं वृत्तमाङ्ग्लानां पक्षपातिनाम् ।
इति सर्वे निनिन्दुस्तान् शङ्करस्यानुकम्पया ॥२॥

चिराय वृत्तपत्रेषु प्रकाश्यन्ते स्म सर्वतः ।
लेखाः शङ्करपक्षीयाः सत्यासत्यविवेचकैः ॥ ३ ॥

अकाण्डसङ्कटे तस्मिन्नाकुलः शङ्करोऽभवत् ।
अदण्ड्यो दण्डितोऽस्मीति न तु सम्पद्विनाशतः ४

सन्धानं युक्तमत्रेति मन्वानः प्राह रानडेः ।
सचिवस्य क्षमां मित्र प्रार्थयस्वेति शङ्करम् ॥ ५॥

विस्मितः सुहृदो वाचा शङ्करः प्रत्युवाच तम् ।
विजानन्नपि निर्दोषं कथमेवं ब्रवीषि माम् ॥ ६ ॥

स्वीकृतो ह्यपराधः स्याद्यस्तैरारोपितो मयि ।
आत्मनोऽपि वरं भङ्गो न पुनः शिरसो नतिः ॥७॥

पतिं निर्विण्णमालोक्य स्वयं पर्याकुलाप्युषा ।
नियम्य निजसन्तापं जगाद मधुरं वचः ॥ ८ ॥

वृथैव मा शुचः कान्त प्रहारोऽयं हि दुर्विधेः ।
पातितस्त्वयि निर्दोषे तव सत्त्वं परीक्षितुम् ॥ ९ ॥

अन्यथा हि कथं दोषस्त्वयि शुद्धात्मनि प्रिय ।
निर्व्याजे पापभीरौ च तादृगुत्थापितो भवेत् ॥१०॥

पदोन्नतिकृतैश्वर्यं शक्यते हि व्यपोहितुम् ।
सद्विद्यारूपमैश्वर्यं तव हर्तुं क्षमेत कः ॥ ११ ॥

वेदार्थविशदीकाराद्यशः प्राप्तासि शाश्वतम् ।
करिष्यसि यथार्थं च पण्डितोपाधिमात्मनः ॥१२॥

त्वमेव ननु जानासि सत्यस्यैवान्ततो जयः ।
यदद्य दुस्सहं भायाचदन्ते मङ्गलाय नः ॥ १३ ॥

अलं वृथा विषादेन हृदये धैर्यमाश्रय ।
मत्वा दुःस्वप्नमेवैतं वृत्तान्तं विस्मराथवा ॥ १४ ॥

युवत्या सान्त्वितः पत्न्या तद्गिरा विस्मितोऽभवत् ।
शिथिलीकृत्य शोकं च प्रत्यभाषत शङ्करः ॥ १५ ॥

उपे सत्यं ब्रवीषि त्वं सूक्तिस्ते सुखदा मम ।
उपामन्दानिलस्पर्शो यथा सञ्चरितात्मनः ॥१६॥

मया कृतमुपानाम त्वयेदं सार्थकीकृतम् ।
मन्ये कृतार्थमात्मानं चरितेन तवेदृशा ॥ १८ ॥

वचनानि तव श्रुत्वा युक्तानि मधुराणि च ।
दुःसहोऽपि मया क्लेशो विस्मर्तव्यो हि सर्वतः १९

मया सहोपभुज्यापि सुखानि विभवोत्तरम् ।
समदुःखसुखा नूनं खेदमल्पीकरोषि मे ॥ २० ॥

सङ्कटे निस्पृहा प्रीतिर्यस्या धैर्यमनश्वरम् ।
यस्या नास्ति हितादन्यर्त्लपत्युः सैव पतिव्रता ॥२१

पश्यन्नपि च ते धैर्यं जह्यां शोकं न चेदहम् ।
लज्जाकरमिदं मे स्याल्लघुचेतोनिदर्शकम् ॥ २२ ॥

दैवयोगाद्यदि प्राणास्त्यजेयुर्मे कलेवरम् ।
किं करिष्यसि सापत्या स्वल्पसंभारसंयुता ॥२३॥

अनयैव दिवारात्रं चिन्तया गिलितोऽस्म्यहम् ।
शिक्षणं नहि बालानां सुसाधं स्याद्धनं विना २४

अदृष्टपूर्वकार्पण्या न जानासि मनागपि ।
निर्धनस्य महत्कष्टं जीवनं चातिदुःखदम् ॥ २५ ॥

अथ वाऽलं विचारेण हितायैव हि देहिनाम् ।
सर्वं भविष्यतीत्येव करिष्ये संस्कृते श्रमम् ॥२६॥

दातुं मेऽवसरं मन्ये कर्मणीह चिकीर्षिते ।
विधिरेव शुभाशंसुस्त्याजयामास मां पदम् २७

अवेदं पूर्वमेवाहं यद्यशो राजसेवया ।
न कदापि मया लभ्यं परिश्रम्यापि भूरिशः ॥२८॥

उक्तं हि पूर्वजैः प्राज्ञैः श्रेष्ठवृत्तिः कृषीवलः ।
वाणिजो मध्यमो वृत्त्या कनिष्ठः परसेवकः ॥२९॥

एकमात्रोऽभविष्यश्चेदहास्यं राजशृङ्खलाम् ।
स्वयमेव चिरात्पूर्वं देववाणीमुपासितुम् ॥ ३० ॥

त्वामहं पुत्रिणीं पश्यन् स्थितोऽस्मि विनियन्त्रितः ।
तथा हि श्रूयते गाथा यद्वार्यं सहेत तत् ॥३१॥

बहुधा चिन्तयत्यस्मिन् पूर्वकार्याद्विनिर्गते ।
पदमेकं ततोऽल्पीयं शासको दातुमिष्टवान् ॥ ३२ ॥

स्वीकरोमि यदि क्षुद्रं पदं यास्यामि लाघवम् ।
इति वर्षद्वयः कार्यात्स विश्रान्तिमयाचत ॥३३॥

अथानुमोदिते तस्य विश्रामे राजकार्यतः ।
त्यक्त्वा मुम्बापुरीं सद्यः प्रययौ पुण्यपत्तनम् ३४

इति सौ. क्षमायाः कृतिषु शङ्करजीवनाख्याने
चिन्तासन्तानवर्णनो नाम द्वादशोल्लासः ॥

---

## त्रयोदशोल्लासः ॥

आश्वास्यापि प्रियामेवं तत्सन्तापजिहीर्षया ।
स्वयमन्तर्विषण्णोऽभूत्प्रसन्नो नाम बाह्यतः ॥ १ ॥

नियन्तुं यतमानोऽपि शुचमन्तर्गतां पराम् ।
अक्षमः सन् कृशाङ्गोऽभूज्ज्वरितश्चिन्तयाऽनिशम् २

चिरादस्य स्वभावज्ञो महात्मा रानडेः सखा ।
क्षीयते प्रत्यहं खेदादित्यवेदीदसंशयम् ॥ ३ ॥

अत्रान्तरे नियुक्तोऽभूद्रानडेः सिमलागिरौ ।
केषुचिद्राजकार्येषु राष्ट्रकोशानुबन्धिषु ॥ ४ ॥

तदवस्थं परित्यक्तुं शङ्करं जीवितप्रियम् ।
अनिच्छू रानडेर्धीमान्मृदु वाचा जगाद तम् ॥५॥

सखे याहि मया साकं सिमलां सकुटुम्बकः ।
कार्यान्तेऽनुदिनं कालं नेष्यावः सर्वथा समम् ६

रमणीयप्रदेशेषु तुहिनाचलसन्निधौ ।
सर्वतः कुशलं ते स्यात्प्रवासे हि महान्गुणः ॥७॥

कृतज्ञः शङ्करोऽवादीद्बाढमेष्यामि केवलः ।
गमिष्यति द्वितीया मे सार्भका पितुरालयम् ॥८॥

अथ सोलापुरं पत्नीं सापत्यां प्रेष्य शङ्करः ।
श्रीरमामाधवार्याभ्यां प्रतस्थे सिमलागिरिम् ॥९॥

अहो साध्व्या रमादेव्याः प्रवासस्य कथा शुभा ।
मातृवाचा तथा बद्धा शोभते सुमनोहरा ॥ १० ॥

बान्धवानां च भृत्यानां सहासीत्पञ्चविंशतिः ।
जग्मुः केचन सेवार्थमन्ये देशं दिदृक्षवः ॥ ११ ॥

रमया रञ्जितावास्तां मार्गे माधवशङ्करौ ।
सीतया राघवौ पूर्वं यथा पञ्चवटीपथि ॥ १२ ॥

पश्यन्तो विविधान् देशान् स्वादयन्तः फलानि च ।
कथालापविनोदेन निन्युर्दिनचतुष्टयम् ॥ १३ ॥

अस्वालानगरं प्राप्ताः प्रत्यूपे धूमयानतः ।
तुरङ्गरथमारूढाः प्रचेलुः पुरतस्ततः ॥ १४ ॥

अवतेरुः परिश्रान्ता मध्याह्ने कालिकापुरे ।
ईक्षितुं किञ्चिदुद्यानमुडीयानामतः श्रुतम् ॥१५॥

इदं पुष्पवनं रम्यं रमामस्मारयद्बलात् ।
कादम्बरीगतं दिव्यं वनोद्देशस्य वर्णनम् ॥ १६ ॥

अत एव निजग्रन्थे प्रियस्मृतिमनोहरे ।
वर्ण्यते हि रमादेव्या तदुद्यानावनी यथा ॥१७॥

बृहतः पादपस्याधस्तले प्रच्छायशीतले ।
विश्रामायोपविष्टाभूज्जनानां पञ्चविंशतिः ॥ १८ ॥

श्रूयते स्म विहङ्गानां सर्वतो मञ्जुकूजितम् ।
नित्यनादेन सम्भिन्नं निर्झराणामितस्ततः ॥१९॥

सेवमानाः सुखस्पर्शं गन्धवाहं सुशीतलम् ।
मन्दशूत्कारमधुरं कुसुमामोदहारिणम् ॥ २० ॥

ह्रस्वमेकं तरुं दृष्ट्वा फलभारसमन्वितम् ।
रसालं मन्यमानां तामवादीच्छङ्करो रमाम् ॥२१॥

नायमाम्रद्रुमो भद्रे पेरनाम्ना तु विश्रुतः ।
आस्वादितं फलं तस्य विदेशे बहुधा मया ॥२२॥

मुहूर्तमथ विश्रम्य शिविकायानमाश्रिताः ।
आरोहन्नभिपश्यन्तः सौन्दर्यं सिमलागिरेः ॥२३॥

अथाष्टवादने रात्रौ शैलशृङ्गमुपागताः ।
प्रासादं भाटकेनात्तमाँदेशपतेर्ययुः ॥ २४ ॥

चत्वारिंशज्जनावासपर्याप्तं तन्निकेतनम् ।
रम्यसौधतलोपेतं दर्शनीयहिमाचलम् ॥ २५ ॥

मा विपण्णो भवत्वार्यः शङ्करः पुनरेककः ।
इति भर्तुः समीपे तं वासयामास गेहिनी ॥२६॥

तथापि नहि विस्मर्तुं नवक्लेशं शशाक सः ।
बहुधा चिन्तयाक्रान्तं रानडेः पश्यति स्म तम् २७

नैच्छदेकाकिनं हातुं दयालुस्तं सुहृन्मणिम् ।
यावच्छक्यमहोरात्रं तेन सार्धं निनाय सः ॥२८॥

शयितावेकपर्यङ्के निशायां भोजनोत्तरम् ।
अनेकनिभृतालापैरप्रीयेतां परस्परम् ॥ २९ ॥

समाप्य गृहकार्याणि विशति स्म रमाम्बिका ।
दुग्धपात्रद्वयं हस्ते दधाना तत्प्रकोष्ठकम् ॥ ३० ॥

अथालोक्य प्रहृष्टौ तौ साध्वी सा प्राह सस्मितम् ।
ननु त्वां सर्वरात्रोऽपि न पर्याप्नोति गोष्ठये ॥३१॥

उत्थाय शयनादाशु प्रहसन् शङ्करोऽब्रवीत् ।
किमुल्लासकरं भानुं वासरो हातुमिच्छति ॥ ३२ ॥

स्वभर्त्रा निर्गमिष्यन्ती प्राह चन्द्रोऽयमुत्थितः ।
आनिशान्तमिदानीं त्वां स एवोल्लासयिष्यति ३३

हिमाद्रेरनिलेन त्वं सेव्यमानः सुहृन्मणे ।
सुखेन बालवज्जोपमेको निद्रातुमर्हसि ॥ ३४ ॥

ततः परेद्युरारभ्य कल्पयामासतुः क्रमम् ।
दम्पती दिनचर्यायाः शङ्करस्यानुरञ्जकम् ॥ ३५ ॥

निजकार्यालयं यास्यन् ददौ मित्राय रानडेः ।
घटिकात्रयनिर्वर्त्यं व्यासङ्गं लेखनादिकम् ॥ ३६ ॥

प्रत्यागतो गृहं प्राह रानडेः सुहृदां वरम् ।
इयच्चिरं त्वया ब्रूहि किं कृतं मदसन्निधौ ॥ ३७ ॥

शङ्करः प्रत्युवाचैनं यदुक्तं तदनुष्ठितम् ।
शंस मेऽद्यतनं वृत्तं कार्यालयगतं सखे ॥ ३८ ॥

इत्यादिलघुसंलापैर्बहिर्विहरतोस्तयोः ।
स्वयं मध्ये प्रसर्पन्ती नन्दति स्म रमान्वहम् ॥३९॥

प्रत्यागतेषु सर्वेषु गृहमस्तमिते रवौ ।
पपाठ शङ्करः कश्चिद्ग्रन्थमुच्चैर्मनोहरम् ॥ ४० ॥

सुहृदोऽस्य सदुच्चारं स्निग्धगम्भीरपाठिनः ।
अभिनन्दन् रमाकान्तः शृणोति स्म मुदान्वहम् ४१

अध्यायमसमाप्यैव विरतः पठनादसौ ।
प्राप्ता भोजनवेलेति हसन् जोषमुपाविशत् ॥४२॥

शिथिलाङ्गमुपासीनं लालयन्नाह रानडेः ।
पश्यतां पश्यतामग्रे किमिदं बालचेष्टितम् ॥४३॥

ततश्च प्रार्थितो भूयः पठित्वा किञ्चिदेव सः ।
पृच्छति स्म क्षुधार्ताय देहि भद्रेऽन्नमाशु मे ॥४४॥

विनोदवचनैरेवं प्रविष्टौ भोजनालयम् ।
गृहिण्या सेव्यमानौ तौ भुञ्जाते स्म सुभोजनम् ४५

उपाविशत्ततः पीठे भोजनाय रमा स्वयम् ।
शङ्करस्य मिताहारं पश्यन्ती जननीव सा ॥ ४६ ॥

अथ कैश्चिदहोरात्रैर्वयस्यः प्राह माधवः ।
अपि ते विद्यते मेधा नवमद्यापि शिक्षितुम् ॥४७॥

प्रश्नहेतुमबुद्ध्वासौ शङ्करोऽस्यान्निरुत्तरः ।
पुनः प्राह रमानाथो नातिदूरमितः सखे ॥ ४८ ॥

कुसुमाद्रौ कृतावासा काचिदस्ति कुलाङ्गना ।
अध्यापयितुमत्रस्थान् स्वभाषां फ्रान्सदेशजा ॥४९॥

यदीच्छेः पाटवं प्राप्तुं मुदा त्वां पाठयिष्यति ।
ज्ञानकोशे नवं रत्नं भूयः सम्भृत्य मोदसे ॥५०॥

तदारभ्य किलाभ्यासं महोत्साहेन शङ्करः ।
होरात्रयं करोति स्म प्रत्यहं शिक्षितस्तया ॥५१॥

यत्नेन प्राप्तनैपुण्यो वाचि मासचतुष्टये ।
विस्मृतप्रायसङ्क्लेशः प्रसन्नः शङ्करोऽभवत् ॥५२॥

फ्रेन्चवाङ्मयसम्पत्त्या सन्तुष्टं सुहृदं पुनः ।
पश्यन्ती सा रमादेवी सविनोदं जगाद तम् ॥५३॥

मिताहारोऽपि पुष्टोऽभूत् फ्रेन्चवाक्सुधया भवान् ।
तन्मन्ये शिक्षिकां धन्यां भिषग्रत्नातिशायिनीम् ५४

निशम्य शङ्करः प्रीतो रमादेव्याः शुभं वचः ।
प्रत्युवाच सदा भद्रे भवती प्रियभाषिणी ॥ ५५ ॥

धन्योऽहं यद्रमादेवि सुहृदौ प्राप्तवानहम् ।
माधवं भवतीं चापि प्राणेभ्योऽप्यधिकप्रियौ ॥५६॥

तवाशीर्वचनैः साध्वि शुभं सर्वं भविष्यति ।
माधवस्य च वात्सल्ये ममात्मा संप्रसीदति ॥५७॥

सस्मितं प्राह सा नूनं माधवस्ते सुतः प्रियः ।
प्राणिनां खलु सर्वेषामपत्यं स्नेहबन्धनम् ॥ ५८ ॥

उवाच शङ्करः पुत्रो माधवो मे न चिन्तितः ।
मित्ररत्ने हि मे चेतो निमग्नं माधवेऽधुना ॥ ५९ ॥

शैशवे सुखदः पुत्रो बाललीलाप्रजल्पनैः ।
प्रयच्छति सदानन्दं माधवस्तु सुहृन्मणिः ॥६०॥

सदा मदीयमित्रस्य गुणैरनुकरोत्विति ।
सुतं माधवनामानमकार्षं हितकाम्यया ॥ ६१ ॥

न हि सा शिक्षिका स्तुत्या न त्वं निन्द्यासि भोजिका
तस्य पुष्टिस्तदायत्ता बुद्धिपोष्याः सुबुद्धयः ॥६२॥

इत्युक्ते माधवेनासौ शङ्करः प्रत्यभाषत ।
सत्यमाह भवान् बुद्धया युवयोरस्मि पोषितः ॥६३॥

युवां हि कारणीभूतौ महत्तमसुखस्य मे ।
कियदल्पोऽद्य मे भाति क्लेशः प्रागतिदुस्सहः ॥६४॥

इत्यादिभिः कथालापैर्मासास्ते क्षणवद्ययुः ।
समाप्तिमगमत्कार्यं माधवस्यापि राष्ट्रियम् ॥ ६५॥

ततः प्रास्थानिकं सर्वं समाप्य सिमलागिरेः ।
प्रदोषे निर्ययुः सर्वे शरदिन्दुमनोहरे ॥ ६६ ॥

इति सौ. क्षमायाः कृतिषु शङ्करजीवनाख्याने श्यामला-
गिरिनिवासवर्णनो नाम त्रयोदशोल्लासः ॥

ततः प्रास्थानिकं सर्वं समाप्य सिमलागिरेः ।
प्रदोषे निर्ययुः सर्वे शरदिन्दुमनोहरे ॥ ६६ ॥

इति सौ. क्षमायाः कृतिषु शङ्करजीवनाख्याने श्यामला-
गिरिनिवासवर्णनो नाम त्रयोदशोल्लासः ॥

---

## ॥ चतुर्दशोल्लासः ॥

सुहृन्मणिद्वितीयोऽसौ निवृत्तः शङ्करो गिरेः ।
निवासमग्रहीदल्पं कुटुम्बी पुण्यपत्तने ॥ १ ॥

विश्रान्तिकालशेषेऽथ त्यक्तकार्यान्तरो मुदा ।
शोधनेऽथर्वमन्त्राणामभवन्निरतः पुनः ॥ २ ॥

नानादिग्देशतः प्राप्तैः श्रुततन्मतिवैभवैः ।
मन्दिरं पण्डितैः पूर्णं दृश्यते स्म दिवानिशम् ॥३॥

विद्वज्जनगुणग्राही देववाणीध्वनिप्रियः ।
चकार स्वागतं तेभ्यो गुरुलाघववर्जितम् ॥ ४ ॥

नानाप्रश्नोत्तरालापैः परमानन्दतुन्दिलः ।
निनाय पण्डितैः कालं स्वाहारमपि विस्मरन् ॥५॥

पुरातनपुरे तस्मिन् परिषत्परिकल्पिता ।
नाम्ना व्याख्यानमालेति जिज्ञासुजनमण्डिता १२

बभाषे शङ्करस्तत्र श्रद्धावेशसमन्वितः ।
लोकोद्बोधकरानर्थान् वेदशास्त्रनिबन्धनान् ॥१३॥

अथ कार्यवशात्तस्य चिरदृष्टः सुहृन्मणिः ।
आययौ सहसा तत्र श्रीमान्माधवरानडेः ॥ १४ ॥

अस्मद्याख्यानमालायां कर्तुमर्हथ भाषणम् ।
इति स प्रार्थितः पौरैरुपेत्य प्रत्युवाच तान् ॥१५॥

अहो वः सन्निधौ साक्षाद्देवगङ्गा यदा स्थिता ।
किमागमेन युष्माकं तदीयोपनदीं प्रति ॥ १६ ॥

प्रशंसावचनैरेवं व्यञ्जयामास रानडेः ।
विद्वत्वे गौरवं सख्युरद्वितीयं गुणप्रियः ॥ १७ ॥

अथ वर्षद्वयान्तेऽसौ नियुक्तोऽभूत्स्वकर्मणि ।
अहंमदनगर्याख्ये तत्पूर्वालोकिते पुरे ॥ ६ ॥

इतिहासप्रसिद्धेऽस्मिन्नगरे विद्वदागमम् ।
हर्षादुत्प्रेक्षमाणोऽसौ स्वाधिकारं गृहीतवान् ॥७॥

महाराष्ट्रगिरोद्धारात्कीर्तिरस्य यशस्विनः ।
श्रूयते स्म चिराल्लोकैरहंमदपुरस्थितैः ॥ ८ ॥

श्रुत्वा तमागमिष्यन्तं पौरा मुमुदिरे भृशम् ।
एष लोकहितं कर्ता सर्वथेति विनिश्चिताः ॥ ९ ॥

नगरे प्राप्तमात्रोऽयं जनैरामश्रितोऽभवत् ।
कचित्संभाषणं कर्तुं महाराष्ट्रीयसंसदि ॥ १० ॥

सुव्याख्यानं ततस्तस्य श्रुत्वा नानार्थबोधकम् ।
पुनश्च श्रवणे तृष्णामदधुः पुरवासिनः ॥ ११ ॥

पुरातनपुरे तस्मिन् परिषत्परिकल्पिता ।
नाम्ना व्याख्यानमालेति जिज्ञासुजनमण्डिता १२

बभाषे शङ्करस्तत्र श्रद्धावेशसमन्वितः ।
लोकोद्बोधकरानर्थान् वेदशास्त्रनिबन्धनान् ॥१३॥

अथ कार्यवशात्तस्य चिरदृष्टः सुहृन्मणिः ।
आययौ सहसा तत्र श्रीमान्माधवरानडेः ॥ १४ ॥

अस्मद्व्याख्यानमालायां कर्तुमर्हथ भाषणम् ।
इति स प्रार्थितः पौरैरुपेत्य प्रत्युवाच तान् ॥१५॥

अहो वः सन्निधौ साक्षाद्देवगङ्गा यदा स्थिता ।
किमागमेन युष्माकं तदीयोपनदीं प्रति ॥ १६ ॥

प्रशंसावचनैरेवं व्यञ्जयामास रानडेः ।
विद्वत्त्वे गौरवं सत्युरद्वितीयं गुणप्रियः ॥ १७ ॥

अथ व्याख्यानमालायामारेभे शङ्करः क्रमात् ।
महाराष्ट्रीयभाषायां भाषणानि दिने दिने ॥ १८ ॥

वेदे बह्वादरोऽत्यन्तं चक्रे प्रथमभाषणम् ।
अस्मद्वेद इति ख्यातं विषयं परिगृह्य सः ॥ १९ ॥

जगतः प्रथमो ग्रन्थः सोऽयं वेद इति श्रुतः ।
अभावेऽपि लिपीनां यः पारम्पर्येण रक्षितः ॥२०॥

न कोऽपि भुवि देशोऽन्यस्संदृशग्रन्थभूषितः ।
तथाप्यल्पे विजानन्ति रत्नमेतदनुत्तमम् ॥ २१ ॥

बोधन्तोऽपि जनाः केचिद् वेदानां परमार्थ्यताम् ।
अहो तिष्ठन्त्युदासीना ननु शोच्यमिदं भृशम् २२

धन्यधन्यो जनो येन दिव्यकोशचतुष्टयम् ।
परस्सहस्रवर्षेभ्यो यत्नेन परिपालितम् ॥ २३ ॥

अतो धन्यतमा विप्रा येषां वक्त्रसरोजतः ।
श्रूयमाणा गिरो दिव्या लोकानामुपचक्रिरे ॥२४॥

नासील्लेखनसौकर्यं न वा मुद्रणवैभवम् ।
अतः संरक्षणं तस्य बभूवात्यन्तदुष्करम् ॥ २५ ॥

स्वरेषु स्खलितं मा भूदिति श्रुतिगणं द्विजः ।
यथाविधि मुखे कृत्वा भक्त्या स्वयमधारयत् ॥२६॥

एतादृशनिधेर्गोप्ता सर्वलोकोपकारकः ।
न किमर्हति धन्योक्तिं निरन्तरमिह द्विजः ॥२७॥

अनादिकालमारभ्य श्रुतीनामभिरक्षणात् ।
नृपेण सत्कृतः सोऽभूज्जनैरन्यैश्च पूजितः ॥२८॥

न प्रशंसामिदं मेने शङ्करो द्विजवर्णनम् ।
न सवर्णाभिमानेन श्रद्धयैव तथाब्रवीत् ॥ २९ ॥

विद्यन्ते भारतीयेषु भूयांसो ब्राह्मणद्विपः ।
न ते श्रद्धान्विता वेदे न वा तद्गुणवेदिनः ॥३०॥

शङ्करस्य महोत्साहं दधुरल्पे हि मानवाः ।
कुशलक्षत्रियादन्यः कः स्यात्खड्गमहत्त्ववित् ॥३१॥

को वाऽपरो वणिक्पुत्राद्वणिज्यामर्मविद्भवेत् ।
तन्न चित्रमनेके स्युर्लोके श्रुतिपराङ्मुखाः ॥३२॥

अथ तद्वेदसम्बद्धं शङ्करस्य सुभाषणम् ।
जनस्य हृदये स्थानं सपदि प्रत्यपद्यत ॥ ३३ ॥

सम्प्रार्थितः पुनः पौरैर्भाषणाय स कोविदः ।
यज्ञोपवीतमाहात्म्यं सप्रमाणमवर्णयत् ॥ ३४ ॥

यथा त्रैवर्णिको यज्ञं यजते स पुरा जनः ।
पावनोऽयममोघोऽयमिति श्रद्धासमन्वितः ॥३५॥

सूत्रं यज्ञसमारम्भे धार्यते स्म द्विजातिभिः ।
कर्मानुष्ठानयोग्यत्वसिद्धये जागराय च ॥ ३६ ॥

अद्य सम्प्रतिवन्धोऽयं यज्ञः सूत्रं तु रक्ष्यते ।
कर्तव्यज्ञापनार्थाय न चिह्नाय द्विजन्मनः ॥ ३७ ॥

इति श्रद्धाय माहात्म्यं तत्सूत्रं यदि धार्यते ।
द्विजः प्रवृत्तिशीलः स्याद्विन्देच्च हितमात्मनः॥३८॥

अथान्यस्मिन् दिने चक्रे भाषणं शङ्करः पुनः ।
किमाङ्ग्लेभ्योऽवबोद्धव्यमिति वस्तु समाश्रितः

गरीयांसः किलाङ्ग्लेयाः प्रायो भारतलोकतः ।
तद्देशे हि कृतावासो वक्तुमेतत् क्षमोऽस्म्यहम् ४०

तदीयराष्ट्रसम्पत्तेस्तदुत्कर्षस्य च क्षितौ ।
हेतुः सर्वप्रजावर्गे साधुविद्याप्रचारणा ॥ ४१ ॥

सुशिक्षिततरा ह्याङ्ग्लाः स्वदेशस्याभिमानिनः ।
अन्योन्यहितकर्तारः सत्यसन्धाश्च धार्मिकाः ४२

सर्वेऽप्येते गुणाः पूर्वं भारतीयानभूषयन् ।
देशे त्वधोगतिं प्राप्ते सद्गुणास्ते तिरोऽभवन् ॥४३॥

आङ्ग्लप्रामाणिकत्वस्य ब्रवीम्येकं निदर्शनम् ।
येनान्येऽपि प्रतीयेरन्गुणाः स्थालीपुलाकवत् ४४

अटन् कतिपयाब्देभ्यः पूर्वमाङ्ग्लेयभूमिषु ।
सत्यचारित्रमेकस्य श्रुत्वाहं विस्मितोऽभवम् ॥४५॥

धनिकः स महानासीदाङ्ग्लो भूरिधनागमः ।
न्यायतस्तेन दातव्यं भूरि शुल्कमिति स्थितम् ॥४६॥

किन्तु शुल्कग्रहस्थाने प्रमादादधिकारिणाम् ।
स लेखतः समादिष्टः प्रदातुं शुल्कमल्पकम् ॥४७॥

एतेन सुबहुद्रव्यं रक्षितं मे भविष्यति ।
अप्रकाशितमर्थं मे न विद्युरधिकारिणः ॥ ४८ ॥

इति ज्ञात्वापि सत्यात्मा लाभमन्यायदूषितम् ।
नाभिमेने विषस्पृष्टां सुधामिव जिजीविषुः ॥४९॥

शुल्काधिकारिणे स्वीयं पारमार्थिकमागमम् ।
निवेद्य दर्शयामास स्वलिखितं लेखमुद्रितम् ॥ ५० ॥

ततः शुल्कमनेनाभूद्देयं शतगुणोत्तरम् ।
शुल्को देशहितायेति प्रमोदेन ददौ हि सः ॥५१॥

अहो भारतवर्षेऽस्मिन् कियन्तः सन्ति तादृशाः ।
अलोभवृत्तयः सत्यव्रता राष्ट्रहितैषिणः ॥ ५२ ॥

शुल्काधिकरणे तत्र प्रधानपदवर्तिना ।
बहूनां वञ्चनावृत्तिः शोचनीया मयेक्षिता ॥ ५३ ॥

इति बान्धवदोपज्ञो वर्णयामास शङ्करः ।
तदीयकुहनाश्चित्रा निजानुभवगोचराः ॥ ५४ ॥

अथोपनिषदः सूक्तैर्भो उत्तिष्ठत जाग्रत ।
इत्यादिपदगुम्फाया व्यख्यानमकरोत्परम् ॥ ५५ ॥

अयि भोः श्रूयतामार्याः सुप्ताः किल वयं स्थिताः ।
अद्यावधि जगद्वृत्तं न ह्यजानीम वस्तुतः ॥ ५६ ॥

अस्मासु निद्रितेष्वेवं प्रचेलुरितरे जनाः ।
तस्मादुन्मील्य नेत्राणि बहिरीक्षामहै क्वचित् ॥५७॥

यो हि कालानुगुण्येन प्रगतिं नानुवर्तते ।
स देशो भ्रष्टकल्याणः सुदूरमवहीयते ॥ ५८ ॥

परःसहस्रवर्षेभ्यो नानादेशसमुद्भवः ।
इतिहासो न चास्माभिः प्रमत्तैरुपलक्षितः ॥ ५९ ॥

प्रतीकार्यः प्रमादोऽयं भारतीयैः सुशिक्षितैः ।
इति ज्ञात्वा स्वकर्तव्यं शीघ्रमुत्थाय जाग्रत ॥६०॥

इत्थमार्जवसम्पन्नैर्हृदयग्राहिभाषितैः ।
जनमुत्तेजयामास देशाभ्युदयसाधने ॥ ६१ ॥

सर्वतः श्रूयतेऽद्यत्वे वाक्यजालं किलेदृशम् ।
तदात्वे तु नवीनत्वादभवत्कौतुकास्पदम् ॥ ६२ ॥

इति सौ. क्षमायाः कृतिषु शङ्करजीवनाख्याने
व्याख्यानविलासो नाम चतुर्दशोल्लासः ॥

---

## ॥ पञ्चदशोल्लासः ॥

आसीद्यज्ञेश्वरो नाम पुरे तस्मिन्महाशयः ।
स चक्रे शङ्करं मित्रं गुणज्ञः परमादरात् ॥ १ ॥

लेखेष्ववर्णयत्सोऽयं तस्य शारीरसम्पदम् ।
तथा हि स कृशाङ्गोऽभून्नातिप्रांशुर्न वामनः ॥२॥

विद्युत्तारुणविद्योतो वभौ तस्य मुखाम्बुजे ।
नैसर्गिकं च तेजोऽन्यद्दीप्यते स्म विलक्षणम् ॥३॥

उग्रता तन्मुखे नासीत्तथापि विकटप्रभा ।
दृढसङ्कल्पवीर्योत्था व्यनक्ति स्म मनस्विताम् ॥४॥

वक्तृता महती नास्य न वा तारः स्वरोदयः ।
तथापि युक्तिभिर्वाचां वशीचक्रे वशी जनम् ॥५॥

तन्मुखात्स्निग्धगम्भीरा प्रसन्नसुमनोहरा ।
निर्झरस्य झरीवोक्तिर्निःससार निरर्गलम् ॥ ६ ॥

तदीयभारती यूनां महोत्साहमजीजनत् ।
हृदि प्रौढवयस्कानां पूज्यबुद्धिं च भूयसीम् ॥७॥

पुरे तत्र कृतावासस्ततो लोकहितेच्छया ।
सामाजिकेषु कार्येषु प्रवृत्तः शङ्करोऽभवत् ॥ ८ ॥

समाजस्य परिष्कारं विमतध्वंसपूर्वकम् ।
चिकीर्षुर्बोधयामास पौरजानपदान् यथा ॥ ९ ॥

सुधारकेण भो आर्याः प्रजाहितचिकीर्षुणा ।
जनापवादसन्त्रासः परित्याज्यो हि दूरतः ॥ १० ॥

ध्येयमेव पुरस्कृत्य स चेष्टेत स्वकर्मसु ।
जलक्लेशभयं हित्वा तितीर्षुरिव निम्नगाम् ॥ ११ ॥

आजग्मुरेकदा केचिन्मतं जिज्ञासवो मम ।
षष्टिवर्षीयवृद्धेन बालिकोद्वाहनं प्रति ॥ १२ ॥

असाम्ययोजनामेतामचिरादेव भाविनीम् ।
रुरुत्सवोऽपि ते धैर्यं न दधुः कर्मणीदृशि ॥१३॥

श्रुतनिःशेषवृत्तान्तः समये तानुपादिशम् ।
यदि सङ्घटनामेनां वेत्थानर्थकरीं परम् ॥ १४ ॥

सर्वथा सा निरोद्धव्या विचारेण किमत्र वः ।
मन्तव्याः पापिनो यूयं यदि तूष्णीमवस्थिताः १५

तन्निरोधे प्रवृत्तानां यदि दण्डः पतेदपि ।
युष्माभिर्नहि भेतव्यं न च स्थेयं पराङ्मुखैः ॥१६॥

मतमेतन्मम श्रुत्वा विवाहं ते न्यवारयन् ।
युष्माभिरपि कर्तव्यं तथैव सति सम्भवे ॥ १७ ॥

प्राचीनाचारभूयिष्ठं दृश्यते नगरं हि वः ।
तत्र रक्ष्यः सदाचारो लोकोत्कर्षप्रसाधकः ॥ १८ ॥

दृश्यते तु बहोः कालात्प्ररूढा सम्प्रदायतः ।
वृत्तिः सामान्यलोकेषु कुत्सिता होलिकोत्सवे १९

हठाद्वर्णोदकक्षेपः साक्रन्दमुखताडनम् ।
इत्यादि चेष्टितं नृणामसभ्यं न हि शोभते ॥२०॥

तस्मात्प्रतिकुटीरं वो नानावृत्तिजुषामहम् ।
गत्वा ब्रवीमि साक्रोशं तुच्छमेतज्जहीत भोः २१

प्राचीनोऽपि दुराचारः सैष भूयो जुगुप्सितः ।
सदोन्मत्तजनस्यैव योग्यो नार्यकुटुम्बिनाम् ॥२२॥

प्राचीनत्वं पुरस्कृत्य न चेत्त्यजथ गर्हितम् ।
मनुष्यत्वस्य युष्माकमहो गुर्वी विडम्बना ॥ २३ ॥

शुभाशुभप्रवृत्तीनां जनस्त्यक्त्वा विवेचनम् ।
पशुवद्यदि चेष्टेत सर्वथा पशुरेव सः ॥ २४ ॥

ऋतूनामखिलानां च वसन्तः सुमनोहरः ।
फलपुष्पभरैर्नानाशकुन्तकलकूजितैः ॥ २५ ॥

साक्षाद्भगवतो रूपमित्येष परिगीयते ।
तस्मात्तत्प्रीतये कार्यो वसन्ते होलिकोत्सवः ॥२६॥

तदेष दिवसोऽस्माभिर्नेतव्यः कर्मभिः शुभैः ।
स्नानभोजनसङ्गीतपुराणश्रवणादिभिः ॥ २७ ॥

सूक्तीरश्रुतपूर्वास्ता निशम्य पुरवासिनः ।
आत्मनो बालिशं भावं बुबुधुः स्पष्टमाशु ते ॥ २८ ॥

तदारभ्य पुरे तस्मिन् श्रूयते स्म जनश्रुतिः ।
नूनं नवावतारोऽयं महर्षेः कस्यचिद्भुवि ॥ २९ ॥

अथ प्रदर्शनं चित्रं शङ्करो नगराद्बहिः ।
कारयित्वा कुमारेभ्यस्तद्दिनोद्मदर्शयत् ॥ ३० ॥

विडम्बनां समालोक्य स्वदुश्चेष्टाप्रदर्शिनीम् ।
बटवो लज्जितास्त्यागं नित्यस्य प्रतिशुश्रुवुः ॥३१॥

अथोत्सवदिने प्राप्ते परं मुमुदिरे जनाः ।
देवदर्शनसङ्गीतपानभोजनवर्तनैः ॥ ३२ ॥

शङ्करोऽत्रावसद् यावत्तावत्तद्वाक्यगौरवात् ।
विरेमुः कुत्सिताचारादहम्मद्पुरे जनाः ॥ ३३ ॥

कार्यमन्यद् यदेतेन पामराणां कृते कृतम् ।
बभूव तदतिश्लाघ्यं नूतनं कौतुकास्पदम् ॥ ३४ ॥

अन्त्यजानां तथा ह्यासीत्पाठशाला पुराद्बहिः ।
द्रष्टुं कुतूहलाविष्टः शङ्करस्तामगात्स्वयम् ॥ ३५ ॥

पाठयिष्यामि वः शिष्यान् सप्ताहे सकृदप्यहम् ।
इति शिक्षणतत्त्वज्ञस्तदध्यापकमब्रवीत् ॥ ३६ ॥

तथेति प्रतिपन्नेऽसौ सम्यगध्यापयत्सुधीः ।
बटूनुल्लासयन् दीनांस्तथा विस्मापयन् गुरुम् ॥३७॥

जातिभेदमनादृत्य प्रजासु समदर्शिनः ।
विद्याप्रदानतो नान्यदस्य सम्मोदमातनोत् ॥ ३८ ॥

इति सौ. क्षमायाः कृतिषु शङ्करजीवनाख्याने
समाजपरिष्करणो नाम पञ्चदशोल्लासः ॥



## ॥ षोडशोल्लासः ॥

अहम्मदपुरे वर्षद्वयं स्थित्वाऽथ शङ्करः ।
राजप्रतिनिधेः प्रापदाज्ञापत्रमतर्कितम् ॥ १ ॥

अवेदि च ततो लेखाद्यदयं नूतने पदे ।
नियुक्तोऽभूत्स्वदेश्यानां दुर्लभे राष्ट्रनायकः ॥ २ ॥

सौराष्ट्रमण्डले राज्यं पोरबन्दरनामकम् ।
अदूरे द्वारकापुर्याः सुप्रसिद्धं विराजते ॥ ३ ॥

पुरा तन्नृपतिर्वृद्धः कुतश्चित्कारणान्तरात् ।
निजराज्यात्परिभ्रष्टस्तस्थौ सामान्यलोकवत् ॥४॥

श्वेताम्बरधरः सोऽभूत्स्वदेशोष्णीषमण्डितः ।
रुद्राक्षमालया कण्ठे मुनिवत्समलङ्कृतः ॥ ५ ॥

तस्य राजपदभ्रंशो नापहर्तुमपारयत् ।
स्वस्य नैसर्गिकं सत्त्वं नृपसत्तमभूषणम् ॥ ६ ॥

आसीत्तस्यात्मजो बालो भावसिंह इति श्रुतः ।
यस्याप्राप्तवयस्कत्वाद्राज्यधूः शङ्करेऽपतत् ॥ ७ ॥

तत्पदे हि ततः पूर्वं न्ययुज्यन्ताधिकारिणः ।
आङ्ग्लेया एव भूयांसो न चैकोऽपि स्वदेशजः ८

पदमुच्चमिदं प्राप्य मुमुदे शङ्करो भृशम् ।
न च स्थानमहत्त्वेन शासकैस्तु गुणग्रहात् ॥ ९ ॥

नानृतं प्रभवेदन्ते सत्यस्यैव ध्रुवो जयः ।
इत्यात्मचरितेनैव शङ्करेण निदर्शितम् ॥ १० ॥

शासितुं च प्रवृत्तेऽस्मिन् सुधामनगरी तदा ।
बहुभिर्नवनिर्माणै रूपान्तरमिवागमत् ॥ ११ ॥

सम्पन्नेऽपि पुरे तस्मिंश्चिरादपि न केनचित् ।
चिन्तितं लोककल्याणं राज्ञा वा सचिवेन वा ॥१२॥

आसीत्तदागमात्पूर्वमवमर्दो महान् यथा ।
चौर्यदुर्भिक्षरोगाणां भयाल्लोकाश्चकम्पिरे ॥ १३ ॥

ऋणेन महता ग्रस्तं राष्ट्रमासीत्समाकुलम् ।
अतश्च शङ्करः कोशे कटाक्षं पूर्वमक्षिपत् ॥ १४ ॥

राष्ट्रं निर्मोचयामास नचिरादृणबन्धनात् ।
ऋणमग्निरिव ध्वंसं ननु कुर्यादुपेक्षितम् ॥ १५ ॥

देशस्यालोचयन्भूयः शोचनीयां परिस्थितिम् ।
दुःखहेतुप्रतीकारे प्रययास दिवानिशम् ॥ १६ ॥

समृद्धिं राष्ट्रकोशस्य जानन्कृपिनिर्बन्धनाम् ।
वापीकूपतटाकादीन् कारयामास सर्वतः ॥ १७ ॥

सम्प्राप्य जलसौकर्यं वर्धमानाः कृषीवलाः ।
मोचयामासुरात्मानं कुसीदिकऋणग्रहात् ॥ १८ ॥

जागरूकः प्रजारोग्ये निर्ममे शङ्करोऽचिरात् ।
उपयुक्तस्थलेष्वाराद्रुग्णशालाः सुसज्जिताः ॥ १९ ॥

ततश्च स्थापयामास पाठशालाद्वयं शुभम् ।
बालिकायोषितामर्थे तदुत्कर्षसमुत्सुकः ॥ २० ॥

रञ्जनार्थं च लोकानां विभागेषु पुरस्य सः ।
कारयामास रम्याणि विहाराणि पृथक् पृथक् ॥२१॥

अग्रतो गणनीयेऽपि राष्ट्रेऽस्मिन्नोपकल्पितम् ।
तन्त्रीसन्देशसौकर्यमिति स्म क्लिश्यते जनः ॥२२॥

शङ्करो नचिरेणैव नुनुत्सुर्न्यूनतामिमाम् ।
तन्त्रीकार्यालयान् राष्ट्रे सर्वतो निरमापयत् ॥२३॥

इत्यादिबहुकार्याणि सर्वाधिकरणेष्वपि ।
चिरसंस्मरणीयानि चक्रे राष्ट्रहितङ्करः ॥ २४ ॥

भूरिकार्यनिमग्नेऽस्मिन्नाययुः प्रत्यहं गृहम् ।
तस्य भोजेश्वराभिख्यं विद्वांसो दर्शनेच्छया ॥२५॥

सर्वोऽपि निरगात्तस्य संस्कृतज्ञो गृहाद्बहिः ।
सुसत्कृतः प्रहृष्टात्मा प्रशंसन्गुणगृह्यताम् ॥ २६ ॥

आगतेषु सुविख्यातस्तस्यासीदतिथिर्महान् ।
विवेकानन्दयोगीन्द्रः स्वामी संसर्गपावनः ॥२७॥

देशं निवर्तमानोऽयं यतीशो द्वारकापुरात् ।
भोजेश्वरगृहस्याग्रं नौकास्थः समवैक्षत ॥ २८ ॥

किमेतदिति जिज्ञासुमवोचन् परिवारिणः ।
श्रीमतः शङ्करस्यायं निवासो हि यशस्विनः ॥२९॥

महतीं वैदुषीमस्य निशम्य मुनिपुङ्गवः ।
द्रष्टुकामोऽभवच्चैतं मणिज्ञ इव मौक्तिकम् ॥३०॥

नौकानिवेशनं प्राप्य स्वामी विद्यातपोधनः ।
भावयन् विदुषा सङ्गं सानन्दः समवातरत् ॥३१॥

स्वामिनेऽभ्यागतायास्मै भोजेश्वरमतार्कितम् ।
चकार स्वागतं भक्त्या शङ्करोऽतिथिवत्सलः ३२

स्नानपूजादिकार्यान्ते विश्रान्तं मुनिसत्तमम् ।
अनयद्भोजनागारं गन्धयष्टिसुवासितम् ॥ ३३ ॥

प्रविष्टस्यास्य शालायामुभौ माधववामनौ ।
प्राञ्जली चक्रतुः पूजां यतिनः शङ्करात्मजौ ॥३४॥

स्थितास्तु बालिकास्तिस्रो लज्जानतमुखाम्बुजाः ।
तारा क्षमा च भद्रा च तद्दर्शनचमत्कृताः ॥३५॥

एता निःशब्दमासीनास्तं मुनीन्द्रमनन्दयन् ।
अधिकं किल पुत्राभ्यां प्रजल्पद्भ्यां प्रतिक्षणम् ३६

भुक्तोत्तरमथ स्वामी ब्रह्मतेजस्समुज्ज्वलः ।
अनेकरम्यसंलापैर्मुमुदे गृहमेधिना ॥ ३७ ॥

परेद्युः शङ्करस्तीरं समुद्रस्यानयन्मुनिम् ।
दर्शयन् विविधान्यस्मै दर्शनीयस्थलानि सः ३८

आलोक्य नूतनाः संस्था निर्मिताः शङ्करेण ताः ।
बभूव विस्मितः स्वामी तदीयमतिसम्पदा ॥३९॥

अथ तौ तीरमापन्नौ मन्दानिलमनोहरम् ।
अपश्यतां कुमारौ द्वौ प्लवमानौ सशिक्षकौ ॥४०॥

तिस्रश्च बालिका धात्र्या विनोदं गमिता भृशम् ।
सकौशलं विनिर्मान्त्या मन्दिरं सिकतामयम् ॥४१॥

सपाणितालमानन्दात् परितः क्रीडनालयम् ।
नृत्यन्ति स्मोपगायन्त्यः कलमान्दोलगीतिकाम् ४२

तासामव्यक्तमधुरां निशम्य स्वरसम्पदम् ।
अनुचक्रे मुनीन्द्रोऽपि तत्क्रीडागीतिनर्तनम् ॥४३॥

शिशुवत् खेलनोद्युक्तं यतिमालोक्य बालिकाः ।
प्रहृष्टाश्चक्रिरे सद्यस्तमेनं सहचारिणम् ॥ ४४ ॥

स्थापयित्वा ततो बालाः स्कन्धोपरि हसन्मुखः ।
अवातरज्जले किञ्चित्तरणच्छद्मना मुनिः ॥ ४५ ॥

अशिक्षयत्तदारभ्य शङ्करस्य कुमारकौ ।
जलविद्यारहस्यानि सर्वक्रीडाविशारदः ॥ ४६ ॥

स्वामी च शङ्करः सायं समारूढौ तुरङ्गमौ ।
जग्मतुर्दीर्घमध्वानं पश्यन्तौ ग्राममण्डलम् ॥४७॥

पाकशास्त्रेऽपि निष्णातो मुनीन्द्रोऽयमुपादिशत् ।
उपादेवीं विशिष्टान्नशाकसम्भारचातुरीम् ॥ ४८ ॥

अथात्मनो निवासेन पुरीं मासचतुष्टयम् ।
पावयन् सत्कृतो लोकैः स्वदेशं प्रययौ मुनिः ४९

अथ गच्छत्सु वर्षेषु शङ्करः समचिन्तयत् ।
सेतुरेको विधातव्यः प्रजासौकर्यसिद्धये ॥ ५० ॥

तदर्थमेकमाङ्ग्लेयं प्रतिश्रुतसुवेतनम् ।
ऋजुर्नियोजयामास यन्त्रशिल्पविचक्षणम् ॥ ५१ ॥

आङ्ग्लस्य वञ्चनावृत्तिरचिराद्दृष्टिगोचरः ।
बभूव सर्वलोकानां छादिताऽपि प्रयत्नतः ॥ ५२ ॥

द्रोहमस्य विनिश्चित्य शङ्करोऽथ समादिशत् ।
राष्ट्रकोशस्य रक्षार्थं विरामं सेतुकर्मणः ॥ ५३ ॥

अर्थचोरमथाङ्ग्लेयमपृच्छदनृताक्षमी ।
मया निश्चितपूर्वेऽपि कार्यान्तावधिके व्यये ॥५४॥

किमर्थं भो व्यतिक्रान्ता मर्यादा ब्रूहि विस्तरम् ।
यदहं राष्ट्रकोशस्य निखिलस्यापि रक्षकः ॥ ५५ ॥

नो चेत्कारागृहे वासं कारयिष्यामि ते ध्रुवम् ।
लोकेष्ववाप्य चाकीर्तिं पदभ्रष्टो भविष्यसि ॥५६॥

आङ्ग्लस्तु गर्धनोऽनिच्छन् विहातुं मुषितं धनम् ।
अपलप्य तदारोपमवमेनेऽधिकारिणम् ॥ ५७ ॥

तस्मादसत्यविद्वेषी शङ्करः शीघ्रमादिशत् ।
तस्य प्रग्रहणं दस्योराङ्ग्लराज्यादशङ्कितः ॥५८॥

वृत्तमश्रुतपूर्वं तत् प्रचलन्मुखतो मुखम् ।
प्रासरत्सर्वसौराष्ट्रे दावे दावानलो यथा ॥ ५९ ॥

बभूवुरतिसङ्क्रुद्धाः सर्वेऽप्याङ्ग्लाधिकारिणः ।
न कदापि पुरा ह्याङ्ग्लो भारतीयेन दण्डितः ६०

शङ्करो राजदुर्गस्थां न्यायशालामनीनयत् ।
बन्दीकृत्य तमाङ्ग्लेयं सत्यवानकुतोभयः ॥ ६१ ॥

आङ्ग्लेयो बीमनो नाम प्राड्विवाकोऽभवत्तदा ।
यस्याग्रे स्थापयामास शङ्करो ह्यपराधिनम् ॥ ६२ ॥

जानन्नपि सदोषं तं पक्षपाती सभापतिः ।
बन्धनान्मोचयामास देशबन्धुं रिरक्षिषुः ॥ ६३ ॥

पराभवमसत्यस्य कर्तुकामस्तु शङ्करः ।
व्यवहारं निनायैतं प्रधानन्यायसंसदम् ॥ ६४ ॥

निःपक्षपातिना तत्र प्राड्विवाकेन दण्डितः ।
आङ्ग्लोऽयमन्वभूत्क्लेशं पदाच्च भ्रंशितोऽभवत् ६५

ततः कतिपयैर्मासैः शुभोदन्तः समागतः ।
श्रीमतो रानडेरुच्चपदप्राप्तिनिवेदकः ॥ ६६ ॥

स हि मुम्बापुरीवर्तिप्रधानन्यायमन्दिरे ।
धर्मासनपदं लेभे शङ्करश्च परां मुदम् ॥ ६७ ॥

अथाधिकारसम्बद्धमहाकार्येषु सर्वदा ।
निमग्नो न क्षणं चापि विश्रान्तिं प्राप शङ्करः ॥६८॥

तथापि व्यसनी तीव्रमाम्नायपरिशीलने ।
अथर्वश्रुतिसम्मग्नो निनायाब्दचतुष्टयम् ॥ ६९ ॥

वहतापि धुरं गुर्वीं नोपेक्षि निजसन्ततेः ।
विद्याभ्युदयसम्पत्तिः प्रथमा सर्वसम्पदाम् ॥७०॥

तथा हि स्नानवेलायामलब्धावसरान्तरः ।
स्वपुत्रौ पाठयामास महाराष्ट्रीयवाङ्मयम् ॥ ७१ ॥

कथाश्च पञ्चतन्त्रादेराचख्यौ सुविनोदिनीः ।
अर्भकाणां सुषुप्सूनां प्रागसौ रात्रिभोजनात् ॥७२॥

अथ भोजनवेलायां प्रत्यहं पृच्छति स्म सः ।
अध्यापकं गणेशाख्यं बालानां सहवासिनम् ॥७३॥

किमद्य पठितं बालैः कस्तेषामतिमन्दधीः ।
कतरेण समीचीनः पुत्रयोरुद्यमः कृतः ॥ ७४ ॥

इति पृष्टोऽब्रवीद्विप्रस्तारतम्यं द्वयोरपि ।
उद्यमी माधवः पाठे वामनश्चित्रलेखने ॥ ७५ ॥

इति संश्लाघयन्नेकं विनिन्दन्नपरं च सः ।
अस्नेहयद् वटुं पूर्वमद्वेषयद्थापरम् ॥ ७६ ॥

धीमन्तमपि मूढेति कनीयांसं समाह्वयन् ।
चकार स्वयमेवैनं द्विजः पाठपराङ्मुखम् ॥ ७७ ॥

शिष्यबुद्धिविशेषेण भिद्यते शिक्षणक्रमः ।
इत्यबोधन्नसौ चक्रे विग्रहं घट्टुना सह ॥ ७८ ॥

कुमारं चतुरोपायैः स्ववशे कर्तुमक्षमः ।
मुमोच शिक्षकः स्वैरं चित्रकर्मप्रवृत्तये ॥ ७९ ॥

अथोद्यमेन हृष्टोऽपि माधवस्य स्थिरात्मनः ।
मूढमस्यानुजं ध्यायन् पिताऽभूच्चिन्तयाकुलः ८०

अरे वामन शङ्खस्त्वमिति संज्ञाप्य सोऽब्रवीत् ।
उद्यमी माधवो विद्वान् भूत्वा कीर्तिमवाप्स्यति ८१

आलस्याद्बालका ये तु स्थिता ज्ञानविवर्जिताः ।
सेवकास्ते भविष्यन्ति माधवस्यालये ध्रुवम् ॥८२॥

वचः श्रुत्वा पितुस्तारा ज्येष्ठा कन्या ततः परम् ।
बभूव बालशिक्षायां परमोत्साहशालिनी ॥ ८३ ॥

१ मुग्ध इत्यर्थे महाराष्ट्रभाषायामिय परिपाटी ।

क्षमा त्वश्रृण्वती भूयो बालखेलारुचिः सदा ।
उद्याने हिण्डमानैका गृह्णाति स्म पतङ्गिकाः ॥८४॥

अथात्यल्पवयस्कां तां बालशिक्षापराङ्मुखीम् ।
सुवर्णां पितृवात्सल्यं दधानो जनकोऽब्रवीत् ॥८५॥

बाले त्वद्भगिनी तारा भविष्यति सुशिक्षिता ।
पण्डितोपाधिमन्वर्थं करिष्यति निजश्रमैः ॥ ८६ ॥

कालेऽथ सद्वरं प्राप्य विबुधं तद्विवाहिता ।
विद्याभिमानमात्मीयं प्रजायां च तनिष्यति ॥८७॥

क्षिपमाणां वृथा कालं पर्यटन्तीमशिक्षिताम् ।
न हि त्वां निर्धनादन्यः परिणेष्यति दुर्मते ॥८८॥

अवश्यं ते स्वसुर्गेहं श्रयणीयं भविष्यति ।
निवासः परगेहेषु लाघवं हि महत्तरम् ॥ ८९ ॥

शिशुभावात्तु तत्काले नावगन्तुं क्षमा क्षमा ।
महत्त्वं जनकस्योक्तेर्जोषमासीन्नतानना ॥ ९० ॥

किन्तु वर्षेषु गच्छत्सु तस्या दशवयस्पृशः ।
हृदये पितुरुक्तीनां प्रतिध्वनिरजायत ॥ ९१ ॥

अदृष्टपितृसौख्यां तां वर्धमानां दिने दिने ।
ज्ञानाध्वनि ध्वनिः पुण्यः शनकैः प्रोदसाहयत् ९२

इति भूयोऽतिवात्सल्यात्पितुर्वक्त्राम्बुजोद्गताः ।
हितोक्तयः सुतामेनां व्यधुर्विद्यापरायणाम् ॥९३॥

इति सौ. क्षमायाः कृतिषु शङ्करजीवनाख्याने
सुधामपुरीनिवासो नाम षोडशोल्लासः ॥

---

॥ सप्तदशोल्लासः ॥

अथ राष्ट्रीयकार्यैस्तैः शङ्करः क्लेशदायिभिः ।
निरन्तरं समाक्रान्तः परिश्रान्तोऽभवन्मुहुः ॥ १ ॥

ननु श्रान्तोऽसि कान्त त्वं न कर्तव्यो बहुश्रमः ।
इति प्रणयवाचोऽपि प्रियाया जज्ञिरे वृथा ॥ २ ॥

प्रयासैर्जर्जरीभूते शरीरे ग्लानिमाप सः ।
अथ व्याधिः पदं चक्रे ववृधे च दिनेदिने ॥ ३ ॥

जानन्नपि निजात्मानं महारोगेण पीडितम् ।
तीव्रसंवेगतो हन्त कार्याणि विदधेऽन्वहम् ॥ ४ ॥

दिनान्तेऽभूत्स निस्सत्त्वो भारवाही वृषो यथा ।
अक्षमश्चेष्टितुं भूयः शयने पतितोऽभवत् ॥ ५ ॥

उषया कश्चिदाहूतो गृहमाशु भिषग्वरः ।
परीक्ष्य प्रकृतिं यत्नादथ शङ्करमब्रवीत् ॥ ६ ॥

विरम्यतामहो आर्याः सर्वकार्यादितः परम् ।
अपेक्ष्यते हि विश्रान्तिर्वाङ्मनःकायगोचरा ॥ ७ ॥

त्यक्त्वा स्थानमिदं शीघ्रमन्यः कोऽपि मनोहरः ।
पवनाम्बुगुणश्लाघ्यः श्रीयतां देश उत्तमः ॥ ८ ॥

इति वैद्यवचः श्रुत्वा निश्चिक्ये पोरबन्दरात् ।
महाबलेश्वरं गन्तुं यत्रासीद्गेहमात्मनः ॥ ९ ॥

अथानुमोदिते तस्य विश्रामे राजकार्यतः ।
नियुक्तोऽभूत्पदे तस्मिन् कश्चिदाङ्ग्लोऽधिकारिभिः

स तु सत्वरमागन्तुं न शशाक पदग्रही ।
लैडाख्यं प्राहिणोत्तस्मान्निजप्रतिनिधिं पुरीम् ॥११॥

नियते शङ्करः काले तरुणस्यागमिष्यतः ।
स्वागताय स्वयं तस्य धूमयानस्थलं ययौ ॥ १२ ॥

धूमयाने समायाते घण्टावादनतः परम् ।
आङ्ग्लमभ्युज्जगामासौ प्रणयेन स्मिताननः ॥१३॥

पश्यन्नपि तमायान्तमपश्यन्निव नाटयन् ।
अवमेने पदोन्मत्तः शङ्करं युवको लघुः ॥ १४ ॥

प्रचचाल पुरः शीघ्रमुद्ग्रीवोऽतिप्रतिष्ठया ।
विहाय शङ्करं पश्चाद्भूलग्नमपमानतः ॥ १५ ॥

दुरहङ्कारिणः प्राप्तश्चरितादाकुलोऽपि सन् ।
शङ्करः स्वं वशीकृत्य न्यवर्तत निकेतनम् ॥ १६ ॥

परेद्युः पदमुद्रां च राजकार्यधुरं तथा ।
आङ्ग्लो ग्रहीतुमायातो विना पूर्वनिवेदनम् ॥१७॥

तमेनं शङ्करः कार्ये निमग्नः कश्चिदाग्रही ।
चिरप्रतीक्षिणं चक्रे मनःपूर्वं विलम्बयन् ॥ १८ ॥

अधस्तनप्रकोष्ठेऽसौ प्रतीक्ष्य घटिकात्रयम् ।
क्रुद्धः क्रमितुमारेभे बुभुक्षुः श्वापदो यथा ॥१९॥

प्रविष्टं कार्यिणां शालामथ शङ्करमब्रवीत् ।
तारस्वरेण तारुण्यमदोन्मत्तः स आङ्ग्लः ॥ २० ॥

अहो आङ्ग्लमपि त्वं मां विलम्बयसि भृत्यवत् ।
किमियं भारतीयानां सभ्यता लौकिकी जने ॥२१॥

शङ्करस्त्वेवमाक्षिप्तो ददौ गम्भीरमुत्तरम् ।
स्वागतं कर्तुमायातो येनाहं सुतिरस्कृतः ॥ २२ ॥

सोऽयं ननु त्वमेवासि सभ्यतागुणशिक्षकः ।
स्वदेशाचारभिन्ना ते प्रवृत्तिः प्रतिभाति मे ॥२३॥

सुज्ञाः सभ्यसमाचारा बहवस्तव देशजाः ।
दिष्ट्याधुनापि विद्यन्ते पूर्वं परिचिता मया ॥२४॥

अनुभावयितुं हि त्वामपमानस्य लाघवम् ।
व्यलम्बयमहं नूनं वयसा पितृसन्निभः ॥ २५ ॥

आङ्ग्लो वा भारतीयो वा सत्कार्यः सममेव हि ।
वयः पूज्यं च जानीहि नापचर्यमितः परम् ॥२६॥

अन्यच्च यदि शुश्रूषा शृणु भोः कथयामि ते ।
शासितुः परमो धर्मः प्रजानामनुरञ्जनम् ॥ २७ ॥

अज्ञातपूर्वहूणश्चेत्त्वयान्यः स्याद्विमानितः ।
आङ्ग्लानां देशजानां च वैमनस्यं स्थिरीभवेत् २८

त्वद्वदन्ये करिष्यन्ति स्वदेशस्याहितं महत् ।
दुराचारैर्वचोभिश्च रभसोच्चारितैर्नराः ॥ २९ ॥

दुर्जनोऽपि वशं नूनं नीयते मधुरोक्तिभिः ।
सज्जनः कुत्सितैः शब्दैर्विमुखीक्रियते क्षणात् ॥३०॥

इत्येवं शङ्करे तस्मिन् ऋजुविस्पष्टवादिनि ।
दुर्विनीतो युवाङ्ग्लेयस्तूष्णीको लज्जया स्थितः ३१

दोषमात्मकृतं जानन्नपि दर्पादयं युवा ।
न ययाचे क्षमामेनं न च पश्चादतप्यत ॥ ३२ ॥

शङ्करोऽथ पदं मुक्त्वा राजदुर्गपुरीं ययौ ।
सीतारामघनश्यामौ द्रष्टुकामः सहोदरौ ॥ ३३ ॥

निवृत्याल्पदिनैरेव स पुनः पोरवन्दरम् ।
संविधानं समारेभे निर्गमाय पुरात्ततः ॥ ३४ ॥

सकुटुम्बपरीवारः प्रजाभिरभिनन्दितः ।
ततो मुम्बापुरीं प्रातः प्रतस्थे जलवर्त्मना ॥३५॥

तिस्रो दुहितरः पुत्रा वामनो माधवस्तथा ।
जयश्च विजयो डिम्भः प्रमोदं प्रापुरध्वनि ॥३६॥

द्वाभ्यामामन्त्रितः पुर्यां सुहृद्भ्यां न्यवसत्सह ।
वासतेयं गृहं लिप्सू रानडेः सद्मसन्निधौ ॥ ३७ ॥

तयोः सन्मित्रयोरेकः श्रीघनश्यामनामकः ।
नाडकर्णिकुलोत्पन्नश्चिरात्परिचितोऽभवत् ॥ ३८ ॥

आसीत्समवयस्कोऽयमाबाल्यकृतसंस्तवः ।
सौहार्दमपुपत्तेन विश्वविद्यालयेऽपि सः ॥ ३९ ॥

द्वितीयो लोकनिष्णातः श्रीमान्मङ्गेशनामकः ।
कनीयान् वयसा विद्वज्जनसंसर्गवत्सलः ॥ ४० ॥

चकार महतीं सेवां शङ्करस्य निजालये ।
तथापि व्याधिवेगोऽस्य वर्धते स्म शनैः शनैः ४१

एकदा शकटारूढः शङ्करो गृहमाव्रजन् ।
ददर्श क्रीडतो बालान्निजान्मित्रगृहाङ्गणे ॥ ४२ ॥

क्षमामालोक्य चूषन्तीं मोदकान् शर्कराकृतान् ।
कुतश्चिद्वणिजः क्रीतान् स्वयं गृहमुपागतात् ॥४३॥

नाणकः केन ते दत्तः क्षमे क्रेतुमिदं वद ।
इति पृष्टा भयाक्रान्ता स्थिता बाला निरुत्तरा ४४

पृष्टा भूयोऽपि साऽवादीत्कश्चित्ते तात बान्धवः ।
प्रार्थितः सन्मयाक्रीणान्नाणकैर्मोदकं मम ॥ ४५ ॥

आच्छिद्य बालिकाहस्तान्मोदकं सामिभक्षितम् ।
दूरादपाक्षिपद्भूमौ रुदतीं चाब्रवीत् पिता ॥ ४६ ॥

नास्ति हीनतरं लोके मानिनः परयाचनात् ।
क्षुधितोऽपि न याचेत बन्धुमित्राणि कर्हिचित् ४७

यदि त्वां सज्जनः कोऽपि सौजन्याद्भोजयेत् क्षमे ।
तदास्मै द्विगुणं दद्याः काले प्रत्युपकारिणी ॥४८॥

नृपोऽपि चेन्महौदार्यात्प्रयच्छेत् पारितोषिकम् ।
नैव तत्प्रतिगृह्णीयास्तदनर्हासि चेत् क्षमे ॥ ४९ ॥

यदि कश्चिन्मनुष्यस्ते हितं कुर्यात्सुचेतसा ।
कुरु तस्य प्रियं भूयस्तदानृण्यं भजस्व च ॥ ५० ॥

दिष्ट्या तु यदि विद्यां ते वितरेत् पण्डितः क्वचित् ।
सर्वथानुग्रहं तस्य प्रतीच्छ परमादरात् ॥ ५१ ॥

धनादप्यधिका विद्या विद्या कीर्तेर्महत्तरा ।
विद्याऽधिका प्रतिष्ठायास्तस्माद् विद्यामुपार्जय॥५२॥

भावार्थमवगच्छन्ती लेशमात्रमिव क्षमा ।
सबाष्पावस्थिता जोषं ध्यायन्ती नष्टमोदकम् ५३

समालिङ्ग्य सुतामेनामुवाच जनकः पुनः ।
इदं तस्मै गृहस्थाय प्रदेहि पणकद्वयम् ॥ ५४ ॥

विस्मितायाः पुनस्तस्याः खिन्नाया निष्ठुरोक्तिभिः ।
समाश्वासकरं नाण्यं तृतीयं च न्यधात्करे ॥५५॥

अजानत्यपि तत्कालं तातस्य वचनं क्षमा ।
सस्मार वयसि प्रौढे साक्षादुच्चारितं यथा ॥ ५६ ॥

न कदापि ययाचे सा नाणकान् हि ततः परम् ।
मित्रं वा बान्धवं वापि नित्यमागामुकं गृहे ॥ ५७ ॥

न विद्यायाः परं ते स्यादपरं पारितोषिकम् ।
निर्धनोऽपि वरं विद्वान् न तु मुग्धो महीपतिः ५८

इति प्रतिध्वनिस्तस्याः पितुर्वाचः सदा हृदि ।
तरङ्गितः समुल्लासं कवेः सूक्तिरिवातनोत् ॥५९॥

निवासं कर्तुकामोऽपि नातिदूरात् सुहृन्मणेः ।
श्रीमतो रानडेर्नासौ प्राप गेहं यथोचितम् ॥६०॥

व्याधिरत्रान्तरे तस्य व्यवर्धत दिने दिने ।
निपात्य शयनीये तं निस्सत्त्वमकरोद्दृत ॥ ६१ ॥

शोचनीयदशामस्य प्रेक्ष्य चिन्ताकुलः सुहृत् ।
जगाद रानडेः प्रीत्या कुरु वासं ममालये ॥ ६२ ॥

अवेहि मित्र यद्यन्मे तत्र तेऽपि स्वकीयता ।
नूनं भविष्यति प्रीत्यै त्वन्निवासो गृहे मम ॥ ६३ ॥

प्राणाधिकः प्रियोऽसि त्वं ननु तद्वेत्सि शङ्कर ।
गेहं मे स्वनिवासेन पवित्रीकर्तुमर्हसि ॥ ६४ ॥

इत्युक्त्वा स्वालयं शान्तिभुवनाख्यं मनोरमम् ।
रानडेः सकुटुम्बं तं निनायाशु सुहृन्मणिः ॥६५॥

भिषग्वर्यास्ततः सर्वे मुम्बापुर्यां सुविश्रुताः ।
तेनाहूताश्चिकित्सायै व्याधेर्मित्रस्य यत्नतः ॥ ६६ ॥

सर्वोपायेषु तच्छान्त्यै प्रयत्नेन कृतेष्वपि ।
न प्राप शङ्करः स्वास्थ्यं देहे बत मनागपि ॥६७॥

स्वकार्यान्नियतान्मुक्तः सचिन्तस्त्वरया गृहे ।
सन्निधिं प्रियमित्रस्य रानडेः स निवर्तते ॥ ६८ ॥

गृहमासन्नमात्रोऽसौ पृच्छति स्म कुटुम्बिनीम् ।
समुत्सुको रमादेवीं सुहृदः प्रकृतिस्थितिम् ॥६९॥

शकटादवतीर्णोऽथ त्वरितं गच्छति स्म सः ।
प्रकोष्ठं शङ्करस्यादौ प्रणुन्नस्तद्दिदृक्षया ॥ ७० ॥

न चासौ गणयामास क्षुधामपि तृषामपि ।
व्यापृतोऽपि स्वकार्येषु सखायं चिन्तयन् सदा ७१

अथ कैश्चिद्दिनैर्दिष्ट्या शङ्करः स्वस्थवद्बभौ ।
महारोगात्समुत्तीर्णः सुविश्रान्तिसुखं ययौ ॥७२॥

भिषजामनुमोदेन नीयते स्म प्रकोष्ठतः ।
उद्याने वा वहिर्वेद्यां स्थाप्यते स्म सुखासने ॥७३॥

आस्तां च निकटे तस्य कपिरादमनामकः ।
कोलिर्नाम शुनी चापि चिरात्तेनैव पालितौ ॥७४॥

द्वावपि प्राणिनावेतौ स्वामिभक्तिपरायणौ ।
मुहूर्तमपि तत्पार्श्वं नाजहीतां दिवानिशम् ॥७५॥

रक्षितुः कुशले नित्यं सावधानौ प्रतिक्षणम् ।
आहाराय समाहूतावपि स्थानान्न चेलतुः ॥ ७६ ॥

आकृष्टौ किङ्करैरेतौ परं चुक्रुशतु रुषा ।
परिहातुमनिच्छन्तौ हसतः स्वामिनोऽन्तिकम् ७७

शङ्करं बहिरासीनं प्राङ्गणे सह भार्यया ।
विनोदितं रमादेव्या शुनीमर्कटसेवितम् ॥७८॥

विलोकयन् दिनस्यान्ते निवृत्तो निजकार्यतः ।
रानडेर्मुमुदेऽत्यन्तं पुनर्जातमिव स्थितम् ॥ ७९ ॥

अथायान्ति स्म गेहेऽस्मिन् रमामाधवयोस्तयोः ।
दीना विद्यार्थिनः केचिद्भोजनार्थं दिवानिशम् ८०

वारागन्तुषु तत्रासीद्रामुर्नाम द्विजात्मजः ।
न रूपवान्न धीरोऽसौ परं विद्यार्जनोत्सुकः ॥८१॥

प्रेक्षमाणा वटून्नित्यं शङ्करस्यात्मजा क्षमा ।
पृच्छति स्म सदा तातं जननीं च कुतूहलात् ८२

क एते वटवस्तात किमस्त्येषां प्रयोजनम् ।
यदिमे नित्यमायान्ति भोक्तुं परभृतो यथा ॥८३॥

धनी वा निर्धनो वापि माननीयोऽतिथिः सदा ।
इति बोधयितुं बालां सोपहासं पिताब्रवीत् ॥८४॥

दास्यामि त्वां क्षमे यूने दामुनाम्ने विवाहतः ।
सुन्दरीं वोढुकामस्त्वामिहायाति हि सोऽन्वहम् ८५

अपि मां मन्यसे मूढां तात बालेति मां विदन् ।
परिणेष्यति किं लोके निर्धनं पण्डितात्मजा ॥८६॥

इष्टो यदि कुमारस्ते वहिःपङ्क्ति किमास्यते ।
कुतश्च रौप्यपात्रेषु त्वत्समं नहि भोज्यते ॥ ८७॥

अथ सायं प्रविष्टेयं बालिका भोजनालयम् ।
तातरानडयोर्मध्ये ददर्शासनयुग्मकम् ॥ ८८ ॥

आसिष्ट दामुरेकस्मिन् रौप्यपात्रपुरस्कृतः ।
शून्यमासीद्द्वितीयं तु क्षमायै परिकल्पितम् ॥८९॥

वधु स्वागतमेहीति करताडनपूर्वकम् ।
कृतमामन्त्रणं श्रुत्वा क्षुभिता बालिकाभवत् ॥९०॥

यथोक्तं जनको यूने हठान्मामर्पयिष्यति ।
इति सा भीतविभ्रान्ता क्रन्दन्ती प्रपलायिता ९१

अहःकतिपयानेवं विहरन्मित्रसद्मनि ।
शनैरुल्लाघमानोऽसौ नयति स्म मुदान्वितः ॥९२॥

अथ प्रत्यायितो वैद्यैर्विकृतेरवरोहणम् ।
जगाद शङ्करो हर्षाद्रमादेवीं च माधवम् ॥ ९३ ॥

गमिष्यामो वयं सर्वे सत्वरं बालकैः सह ।
महाबलेश्वरस्थं मे शोणदुर्गाख्यमालयम् ॥ ९४ ॥

स्वबले श्रद्दधानोऽपि दैवतन्त्रो हि मानवः ।
कुर्वाणेऽपि नरे यत्नमीश्वरेच्छैव साधिका ॥ ९५ ॥

तथा हि सहसा तस्य शङ्करस्याभवत्पुनः ।
नचिरादुत्कटो व्याधिरचिकित्स्यो भिषग्वरैः ॥९६॥

असह्यवेदना तेन सह्यते स्म सहिष्णुना ।
चिन्तया त्वेकया तप्तो जगाद गृहिणीमुपाम्॥९७॥

किं करिष्यसि हा कान्ते मद्वियुक्ता भवेर्यदि ।
बालान् कथमिमान् सप्त स्ववशे स्थापयिष्यसि ९८

मम बालदशायाश्च पुत्राणामुत्तमा दशा ।
चतुर्णामपि सद्विद्यासम्पत्तिः सुलभा भवेत् ॥९९॥

जीवत्येव मयि ख्यातिं लभेरन्नचिरादिमे ।
देशसेवां च कुर्वीरन्नित्यासीन्मे मनोरथः ॥१००॥

कथमेकाकिनी तु त्वं साधयिष्यसि मे मतम् ।
इति शोचन्नहोरात्रं विनिद्रः शङ्करोऽभवत् ॥१०१॥

चिन्ताकुलाप्युपादेवी पतिसान्त्वनतत्परा ।
आश्वासयद्वचोभिस्तं मधुरैर्धैर्यमाश्रिता ॥ १०२ ॥

हास्यार्थं सैकदा प्राह दुःखितापि स्मितानना ।
किं न चिन्तयसि प्रेयन्नावयोः प्रियबालिकाः १०३

काञ्चनं क्रेतुमिच्छामि त्वयाहमनुमोदिता ।
अलङ्कर्तुमिमास्तिस्रस्त्वदीयविभवोचितम् ॥१०४॥

शङ्करः प्रत्युवाचैनां त्वयि मे प्रत्ययो दृढः ।
त्वदन्या नास्ति कन्यानां रक्षिका तद्धितैषिणी १०५

विद्याविनयसम्पन्ना द्विजेन्द्राः सत्कुलोद्भवाः ।
वराः सन्निपतिष्यन्ति स्वयं कन्यार्थिनः प्रिये १०६

अभ्यस्तबालशिक्षास्ता नवोढाः पतिसंश्रयात् ।
प्राप्स्यन्ति कन्यकास्तिस्रः कलासाहित्यसम्पदम्

किं निसर्गसुरूपाया रत्नकाञ्चनभूषणैः ।
शरदिन्दुविभासिन्या रजन्याः किं प्रदीपतः १०८

अपि न स्मरसि प्रोक्तं मया पूर्वमनेकशः ।
तस्या हि भूषणैः कार्यं यस्या रूपं न विद्यते ॥१०९॥

अथ तस्य महाव्याधिः परां कोटिं समस्पृशत् ।
वैद्याश्च सूचयामासुर्नैराश्यं स्पृष्टभूतलाः ॥ ११० ॥

असह्ययातनाग्रस्तं मित्रं कालवशे स्थितम् ।
ददर्श दर्शभभृद्बाष्पे रानडे रुद्धलोचनः ॥ १११ ॥

अनिच्छन्निजसन्तापं कर्तुं मित्राक्षिगोचरम् ।
स प्रकोष्ठाद्बहिः स्थित्वा हा हा मित्रेति शोचति[1] ११२

अथ फाल्गुनमासस्य वासन्तोत्सवसंभ्रमे ।
रमणीयदिने पुण्ये समासन्नेऽर्कवासरे ॥ ११३ ॥

१ विम्यये इति पाठान्तरम् ।

स्वोत्तरं स्वकुटुम्बस्य रक्षां मित्राय सूचयन् ।
आलिङ्ग्य तं प्रणम्याथ रमादेव्यै च नीरवम् ॥११५॥

उपायामाप निर्वाणं शङ्करः कुलदीपकः ।
अथापि मूर्तिभेदेन दीप्यते यशसोज्ज्वलः ॥११५॥

इति सौ. क्षमायाः कृतिषु शङ्करजीवनाख्याने
दीपनिर्वाणो नाम सप्तदशोल्लासः ॥

---

# शुद्धाशुद्धिपत्रम् ।

| पृष्ठे | श्लोके | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११ | ७ | वध्वा | बद्धा |
| २० | ३८ | पुण्यपूर्यां | पुण्यपुर्यां |
| ३६ | १६ | अनुध | अनूध |
| ३७ | १९ | व्यालिखद | व्यालिखद् |
| ,, | २० | गृण्हते | गृह्णते |
| ४३ | १८ | प्रभावतीम् | प्रजावतीम् |
| ४९ | ८ | तदनघताम्: | तदनर्घताम् |
| ६२ | १ | तेलंग | तेलङ्ग |
| ७२ | १५ | अद्रुता | अद्भुता |
| ८२ | २१ | अन्यत्त्पयुः | अन्यत्पत्युः |
| ८४ | ३२ | अर्त्यीयं | अर्त्यीयः |
| ,, | ३३ | वर्पद्वयः | वर्पद्वयं |
| १०६ | ५५ | व्यस्व्यान | व्याख्यान |
| १३५ | २६ | नापचर्यम् | नापचार्यम् |

# सौ० क्षमया प्रणीताः संस्कृतग्रन्थाः ।

१. सत्याग्रहगीता
२. कथापञ्चकम्
३. विचित्रपरिषद्यात्रा
४. शङ्करजीवनाख्यानम्
५. ग्रामज्योतिः

एतानधिकृत्य प्रकाशितानि विद्वन्मतानि संक्षेपतो यथा—

प्यारिसनगरे—"सत्याग्रहगीतानामनि ग्रन्थेऽस्मिन् इण्डियादेशे महात्मना गान्धिना प्रवर्तितं निरुपमं सत्याग्रहयुद्धं गीयते । महाभारतान्तर्गतायां भगवद्गीतायामिवात्रश्लोकमया अष्टादशाध्यायाः सन्ति । यथा भारते पाण्डवानां जन्मसिद्धस्याप्यधिकारस्य निरोधः प्रतिपक्षैः स्वार्थपरैः कृतस्तथा भारतीयानामाजन्मसिद्धस्वतायाः प्रत्याख्यानमाङ्ग्लसाम्राज्यप्रचालकैः कृतमिति द्वयोरपि समानो युद्धहेतुः । ललितमधुरा सरलसुबोधा च हृदयग्राहिणी प्रबन्धस्य सरणिः । ऐतिहासिकोऽयं ग्रन्थः स्त्रियापि गैर्वाण्यां व्यरचीति नितराममिनन्दनीया कवयित्री ।

सुप्रभातनाम्नि मासिकवृत्तपत्रे—"अस्या अष्टादशाध्यायेषु सत्याग्रहस्येतिहासः, तदपेक्षया च गान्धिमहोदयस्य जीवनवर्णनमपि कृतम् । आफ्रिका-देशादारभ्य लवणसत्याग्रहं यावत्, मोहमयीप्रभृतिनगरेषु च जातस्य वैदेशिकानामत्याचारस्य सजीवं प्रत्यक्षमिव चित्रं चित्रितम् । रचना व्यासवाल्मीकिसर-

णिमनुसरन्ती सरलसरला, प्रसन्नमधुरा, मसृणमसृणा पाठकानां हृदयङ्गमा आकर्षणकारिणी च विद्यते ॥

टैम्स आफ इण्डियानामके सुप्रसिद्धदैनिकवृत्तपत्रे कथापञ्चकं प्रति (सरलानुवादः)–'पञ्चभिर्विचित्रलघुकथाभिः संवलितोऽयं ग्रन्थः। अनुष्टुभा सरससुमनोहरैर्वचनकुसुमैर्गुम्फिता कथामालिकेयं भरतखण्डे प्रजानां लौकिकं कौलिकं च जीवनचरितं प्रकाशयन्ती पाठकानां कण्ठमलङ्करोति। सरणिश्च हृदयङ्गमं कमपि विशेषं पुष्यति। तथा हि कथायाः सहसोपक्रमः, लाक्षणिकप्रयोगाणां सौन्दर्यं, गुप्तकथांशानां क्रमविकासकारिणी संविधानवैचित्री कथायाः पराकाष्ठा तदनु प्रसह्यान्तगमनं चेत्यादयो गुणाः प्रत्यक्षीभवन्ति। पाश्चात्यकवीनां लघुकथाप्रणयनसरणिमनुरुन्धाना कृतिरियं शुद्धसंस्कृतमयी सहृदयानां चित्तमावर्जयतीति वयं प्रतीमः ॥

विचित्रपरिषद्यात्रा–लघुपुस्तिकेयमनन्तशयने अनतिपूर्वप्रवृत्तमखिलराष्ट्रीयप्राच्यभाषापरिषत्संमेलनं प्रति मोहमयीनगराद्गतवत्या ग्रन्थकर्त्र्या यद्यद्दृष्टश्रुतानुभूतं तत्सर्वं श्लोकैरुपवर्णयति ॥

शङ्करजीवनाख्यानम्–स्वपितुर्जीवनचरितोल्लेखनात्मकं रमणीयं सप्तदशोल्लाससमुपेतं छन्दोमयं काव्यम् ॥

ग्रामज्योतिः—कथात्रयात्मको ग्रन्थः। त्रयाणां भारतीयग्रामस्त्रीरत्नानां प्रबुद्धचरितोपवर्णनेन सुप्तराष्ट्रप्रबोधं साम्प्रतिकं प्रख्यापयति। अयमद्यापि न प्रकाशितः। संस्कृतनाम्नि मासिकपत्रे तु खण्डशः प्राकट्यं नीतः ॥